इति पद्येन बोधत्वकरूपा शक्तिर्निरूपिता ।

'नञ्समासे चापरस्य प्राधान्यात्सर्वनामता ।
आरोपितत्त्वं नञोत्यं न ह्यसोप्यऽतिसर्ववत्' ।। इत्यनेन

नञर्थं निरूप्य, 'तत्सादृश्यमभावश्चे'ति पद्यस्यार्थिकार्थपरत्वं प्रतिपादयामास ।

'द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।
उपास्येते हरिहरौ लकारो दृश्यते यथा' ।।

इति पद्येन प्रादीनामुपसर्गाणामिव चादीनां द्योतकत्वं न्यरूपयत् ।

'कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम् ।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम्' ।।

इत्यनेन भावप्रत्ययार्थो निरूपितः । ततो देवताप्रत्ययार्थः, एकत्व-संख्यानिर्णयः, उद्देश्य-विधेययोः संख्याविवक्षानिर्णयः क्त्वाप्रत्ययादेरर्थश्च निर्णीतः ।

अन्ते च

'वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः' ।।

इत्यादिना वर्णस्फोटादीनष्टप्रकारान् स्फोटस्य विशदीकृत्य, अवसाने अखण्डवाक्यस्फोटं ब्रह्मरूपिणमभिधाय तन्नमस्काररूपमङ्गलेन—

'इत्थं निष्कृष्यमाणं यत् शब्दतत्त्वं निरञ्जनम् ।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः' ।। इति उपसमाहार्षीत् ।

## भाट्टतन्त्ररहस्यप्रतिपाद्यानां निर्देशः

नव्यमीमांसकोऽयमाचार्यखण्डदेवो नव्यतार्किकाणां पद्धतिमनुसृत्य, वैयाकरण-तार्किकमतनिराकरणमुखेन भाट्टसम्मतां शाब्दबोधसरणिं सुपरिष्कृतां न्यरूरुपत् प्रस्तुते प्रबन्धे । प्रबन्धेऽस्मिन्नध्वरमीमांसाशास्त्रस्य प्रमेयं धर्मम्, अधर्मं च सविशेषणकृत्यमलिलक्षत् । ततो वेदेनेष्टसाधनताबोधननिरूपणमुखेन तार्किकसम्मतं लिङर्थं सपरिकरं तदन्वयप्रकारञ्चोपवर्ण्य, अनन्तकार्यकारणभावकल्पनागौरवेणादूदुषत् । स्वाभिमतं विध्यर्थं मण्डनमिश्र-पार्थसारथिमिश्राभिमतविध्यर्थस्य निरसनेन न्यायसुधाकारस्य मतमवलम्ब्य, निरधीधरत् । विधि-निषेधस्थले च शाब्दबोधप्रकारं विध्यर्थवादयोः प्राशस्त्याप्राशस्त्ययोस्स्वरूपमभिधाय, शाब्दीभावनायाः करणांशेतिकर्तव्यतांशयोश्शाब्दबोधे भानं न भवतीत्यभिधाय, क्वचित्पदैकवाक्यता, क्वचिद्वाक्यैकवाक्यतेति विविक्तस्थलनिर्देशपूर्वकम् सम्प्राधीधरत् ।

शाब्दबोधविषये तार्किकमतमुपक्रम्य प्रथमान्तपदोपस्थाप्यश्शाब्दबोधे मुख्यविशेष्यतया भासत इति पक्षं सपरिकरमुपपाद्य, निराचकार। तथैव धात्वर्थमुख्यविशेष्यकशाब्दबोधं शाब्दिकानामभिमतमुपपाद्य, निरास्थत्। भावप्रधानमाख्यातमिति यास्कस्मृतेः शाब्दिकानां व्याख्यानमविमृश्यमानसुन्दरमित्युपावर्णयत्। भाट्टमीमांसकसम्मतमाख्यातार्थभावानायाः मुख्यविशेष्यत्वं व्यवातिष्ठिपत्। ततो लकारार्थम्, तस्य भावनायामन्वयप्रकारञ्च प्रत्यपीपदत्। ततो धात्वर्थविषये नैयायिकानाम्, वैयाकरणानाञ्चाभिमतमर्थम् निरस्य, स्वमतेन धात्वर्थं परिनिश्चिकाय।

ततो विभक्त्यर्थम् सम्बोधनप्रथमार्थम्, पाणिनिमतेन, कात्यायनमतेन च प्रथमार्थम्, ततो द्वितीयार्थकर्मत्वं क्रियाजन्यफलशालित्वसमनियतमखण्डोपाधिरूपं प्रत्यपीपदत्। 'क्रियाकारकयोः सम्बन्धस्य वाचिका द्वितीये'तिपातञ्जलभाष्यावलम्बनेन 'तार्किकाणाम्, शाब्दिकानां च कर्मत्वम् निरस्यति स्म। ततो गुणकर्मानुशासनिकानामुदाहरणमुखेन ततोऽन्यत्रापि दृश्यत इति वार्तिकांशस्य परिगणिताव्ययभिन्नाव्यययोगेऽपि द्वितीया दृश्यते इति केषाञ्चिद्व्याख्यानं भाष्यानारूढमिति दूषयित्वा 'ततोऽन्यत्रापि दृश्यते' इति वार्तिकांशं क्रियाविशेषणानां कर्मत्वमित्येतदर्थपरकतया व्याख्याय, 'स्तोकं पचती'त्यादौ वैयाकरणसम्मतं शाब्दबोधं निरस्य, स्वमतेन शाब्दबोधः उपवर्णितः। एवं तृतीया-चतुर्थी-पञ्चमी-षष्ठी-सप्तमीविभक्तीनां विचारेण तार्किकाणाम्, शाब्दिकानां च प्राचाम्, नव्यानां चाभिमततत्तदर्थनिरासमुखेन स्वाभिमतस्तत्तद्विभक्त्यर्थो निरूपितः।

## संबन्धसामान्यबोधेऽपि, विशेषे पर्यवसानं मानान्तरवशात्, न तु द्वितीयबोध इति निरूपणम्

तत्र लिङर्थ-सुबर्थादीनां भावनान्वयप्रतिपादने परम्परासम्बन्धावगाहिनमेव शाब्दबोधप्रकारं प्रतिपादयति। परम्परासम्बन्धः सम्बन्धत्वेन शाब्दबोधे भासते, संसर्गविशेषलाभस्तु 'भूतलं घटवत्' इत्यादाविव प्रमाणान्तरवशादेवेति निरूपयति। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ विध्यर्थः प्रवर्तना प्रवृत्तिप्राक्कालीनतत्तल्लिङादिजन्यस्वज्ञानप्रयोज्येष्टसाधनतानुमितिप्रयोज्यत्व —सम्बन्धेन भावनायामन्वेति। 'न कलञ्जं भक्षयेत्' इत्यत्र तु लिङर्थः निवर्तना स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्याभावप्रतियोगितासम्बन्धेन भावनायामन्वेति। संसर्गविशेषबोधश्च प्राथमिकशाब्दबोधानन्तरकालिकः प्रमाणान्तरायत्तः। संबन्धसामान्यबोधस्य विशेषे पर्यवसानमेव, न तु तदर्थं द्वितीयबोध इति ध्येयम्।

## पूर्वमुक्तस्यैवार्थस्य सिंहावलोकनन्यायेनाऽनुसन्धानम्

सर्वत्र कर्तृत्व-कर्मत्वादिकमखण्डोपाधिरूपमित्यभिप्रयन् कर्तृत्व-कर्मत्व-करणत्व-सम्प्रदानत्व-अपादानत्वाधिकरणानि सर्वाण्यप्येतान्यखण्डानीत्यूरीकरोति स्म, यथा परसमवेतक्रियाजन्यफलशालित्वसमनियतमखण्डं कर्मत्वमिति प्रतिपादयति। 'ग्रामं गच्छति' इत्यादौ द्वितीयावाच्यसंख्यायाः परम्परासम्बन्धेन (सामानाधिकरण्येन) द्वितीयार्थे कर्मत्वेऽन्वयः। न तु साक्षात्सम्बन्धेन प्रकृत्यर्थ इत्यभिप्रैति। 'पचति, यजते' इत्यादौ धात्वर्थोऽनुगतप्रतीतिसिद्धम्। पाकत्वयागत्वादिकमखण्डो धर्म एव। सुबर्थ कर्मत्वादिकं स्वनिरूपकधात्वर्थ-करणकत्वादिपरम्परासम्बन्धेनाख्यातवाच्यभावनायामेवान्वेति, न तु निरूपकतासम्बन्धेन धात्वर्थे।

## धात्वर्थस्यान्वयनिरूपणम्

धात्वर्थोऽपि कर्मत्वेन, करणत्वेन वा द्वेधा विवरणदर्शनात् कर्मत्व-करणत्वान्यतरसम्बन्धेन भावनायामेवान्वेति। यथा 'चैत्रः काष्ठैरोदनं पचति' इत्यत्र धात्वर्थो भावनायां विशेषणतया भासते। ईदृशकल्पनायां किम्मूलमिति मूलगवेषणायां प्रकृत्यर्थप्रकारकशाब्दबोधं प्रति सुब्जन्योपस्थितिः कारणम्। लिङ्गसंख्याव्यतिरिक्तप्रातिपदिकार्थव्यतिरिक्तसुबर्थप्रकारकशाब्दबोधं प्रत्याख्यातपदजन्यभावनोपस्थितिः कारणमिति कार्यकारणभावकल्पनालाघवमेव मूलमिति मन्यते। 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन' इति स्मृत्या धात्वर्थविशेष्यतयाऽऽख्यातार्थबोधः प्रसिद्धः। काल-संख्या-कर्तृ-भावनानामाख्यातवाच्यानां मध्ये कस्य विशेष्यत्वम्, कस्य वा विशेषणत्वमित्याकाङ्क्षायां 'भावप्रधानमाख्यातम्' इति स्मरणं भावनातिरिक्ताख्यातार्थम् प्रति भावनायाः प्राधान्यं नियच्छति, एवं सति कस्यापि संकोचः, अनुवादकत्वं वा न कल्पनीयमिति।

## क्रियाविशेषणविषये नूतनव्यवस्थावर्णनम्

क्रियाविशेषणपदाद्द्वितीया भवतीत्यत्र महती विप्रतिपत्तिर्दृश्यते। तत्र किमप्यनुशासनं नास्तीति केचन मन्वते, अपरे तु भाष्यमेव तत्र नियामकमिति, अन्ये तु तत्र द्वितीया न भवति, किन्तु प्रथमैव प्रथमातिक्रमणे कारणाभावादिति च मन्वते। न्यायग्रन्थेष्वभियुक्तैः 'क्रियाविशेषणानाम् कर्मत्वमि'ति तु सर्वैरप्यभिधीयते। परमयं ग्रन्थकारः 'उभसर्वतसोः कार्या' इत्यादिवार्तिकस्य तुरीयचरणं क्रियाविशेषणानां कर्मत्वप्रतिपादनपरतया व्याचख्यौ।

तदेव पदवाक्यरत्नाकरकृता, तच्छिष्येण गिरिधरोपाध्यायेन विभक्तिनिर्णयकृता चानुसृतं ६२७ पृ० सं० दृश्यते। एवं च ततोऽन्यत्रापि दृश्यते' इत्यनुशासनेन क्रियाविशेषणपदात् द्वितीयामात्रं भवति, न तत्र कर्मसंज्ञा, एतेन कर्मणि लकारापत्तिर्निरस्ता। कृतिशक्तस्याख्यातस्यानुशासनिकी कर्तरि निरूढलक्षणेत्यादि प्रमेयजातमुपवर्णयति।

## लः कर्मणीति स्मृत्यर्थविचारः

'लः कर्मणि च भावे चाऽकर्मकेभ्यः' पा० सू० ३-४-६९ इति पाणिनीयम् स्मरणम्। कर्तरि कृत्' सूत्राच्चकारात्कर्तरीत्यनुकृष्यते। तस्यायमर्थः-सकर्मकेभ्यः धातुभ्यः कर्मणि, कर्तरि च लकारा भवन्ति। अकर्मकेभ्यो धातुभ्यो भावे, कर्तरि च लकारा भवन्तीति वाक्यद्वयं सम्पद्यते, तेन भाव-कर्म-कर्तारो लकारार्थाः इति प्रतीयन्ते। तेन कर्तुर्वाच्यत्वमिति शाब्दिका मन्वते। उत्तरत्रापि तयोरेव कृत्य इत्यत्र संदंशमध्यपाठाद्वाच्यत्वमिति, तत्र प्रधानभूतप्रकृतधात्वर्थाश्रयः कर्ता, फलाश्रयश्च कर्म। तत्र फलव्यापारयोर्धातुनैवोपात्तत्वादाश्रयमात्रं लकारार्थः, 'अन्यलभ्यश्शब्दार्थः' इति न्यायात्। ततश्च स एवार्थस्तिङामपि, तेषामपि लादेशत्वात् स्थान्यभिधानसमर्थ एवादेश इति शाब्दिकानां मर्यादा।

## आख्यातार्थविषये तार्किकमतम्

तत्र नैयायिका मन्यन्ते-आख्यातस्य कृतौ शक्तिः, लाघवात्, न तु कर्तरि। यदि लः कर्मणीति यथाश्रुतसूत्रादाख्यातस्य कर्तरि शक्तिस्स्वीक्रियते, तदा शक्यः कर्ता शक्यतावच्छेदकं कृतिमत्त्वम्। तच्च कृतिरेव, तद्वत्त्वञ्च तदेवेति न्यायात्, सा च प्रतिकर्तृ भिन्ना, तथा च शक्यतावच्छेदका नानास्स्युः। एवं नानाधर्माणामवच्छेदकधर्मविधयोपस्थितौ गौरवं स्यात्। अतो लाघवादाख्यातस्य कर्तृत्वे शक्तिः, कर्तृत्वञ्च क्रियानुकूला कृतिरेव। तस्मादनुकूलकृतित्वेन शक्यतावच्छेदको धर्मः यावत्कृतिषु विद्यमाना कृतित्वजातिरेकैवेति परमलाघवम्। नन्वेवमख्यातप्रत्ययस्य कृत्यर्थकत्वं स्वीक्रियते, तदा कर्तुरनुक्तत्वात् 'अनभिहिते कर्तृकारके तृतीया स्यात्' इत्यनुशासनेन चैत्रेण पचतीति प्रयोगापत्तिरिति न शङ्कनीयम्। आख्यातप्रत्ययस्य कृति-काल-संख्याद्यनेकार्थस्वीकारेण यत्र स्थले कर्तृगतसंख्याऽऽख्यातप्रत्ययेनाऽनभिहिता, तत्र तृतीयेति स्वीकारेणाऽदोषात्।

## कृतिवाचित्वेऽपि वैषम्यकथनम्

अत्रेदं विचारणीयम्—'चैत्रः पचति, चैत्रः पक्ता, पचन्तं देवदत्तं पश्य,

पचते दक्षिणां देहि' इति प्रयोगा दृश्यन्ते। तदनुसारेण क्वचित्कृतौ शक्तिः, क्वचिदाश्रय इत्यवश्यमङ्गीकरणीयम्। न चैतावता घञादिसाम्यं शङ्कनीयम्। घञादिवाच्यो भावः सलिङ्गः यथायथं सकलकारकान्वितश्चेति वैषम्यं स्पष्टं प्रतीयते। अत्र च वैषम्येऽनुभवबलात्कल्पनीयः शब्दशक्तिस्वभाव एव नियामक इति सर्वानुभवसिद्धमेतत्। अत एव 'कृदभिहितो भावो द्रव्यवत्प्रकाशते' इति भाष्यकारवचनम्। 'एतच्चाऽव्ययीकृते भावे' इति वार्तिके स्फुटम्। अत एव कर्तृकर्मणोर्द्वित्वे, बहुत्वे च द्विवचन-बहुवचने भवतः, भावे लकारस्तु क्रियामेवाभिधत्ते, तत्र प्रथमपुरुषैकवचनमेव भवति 'एकवचनन्तु करिष्यत' इति भाष्यात्। न तु मध्यमोत्तमौ युष्मदस्मत्सामानाधिकरण्याभावात्, नापि द्विवचन-बहुवचने। द्वित्व-बहुत्वयोरप्रतीतेः। 'उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते' इत्यत्र भाष्यप्रयोगवचनाद्भावेऽपि बहुत्वमिति'। अतो द्विविधानां प्रयोगाणामुपपत्तये यथानुभवं क्वचिल्लकारस्य कृतौ शक्तिः, कृदादिष्वाश्रये शक्तिरित्यङ्गीकर्तव्यम्।

ननु 'पचन्तं देवदत्तं पश्य' इत्यादौ शतृ-शानजादीनामपि कृतिमात्रबोधः इति वक्तुं न शक्यते। तत्राभेदसंसर्गस्य वक्तव्यतया कर्तृवाचकत्वस्यावश्यमभ्युपगमनीयत्वात्। यद्युच्येत नामार्थयोरभेदसंसर्ग एव बीजम्। अत एव गौरवस्य प्रामाणिकतया वैषम्यम्। शत्रादीनां कर्तरि शक्तिः, तिबादीनां तु कृतावेवेति वैषम्यमिति वक्तुं न शक्यते, अन्याय्यश्चानेकार्थत्वमि'ति न्यायात्। स्थानिनो वाचकत्वमनङ्गीकृत्य वैयाकरणरीतिमाश्रित्य सर्वत्रादेशा एव वाचकाः इत्युच्यते, तर्हि हरेऽव विष्णोऽव' इत्यादिषु वाक्यस्फोट आपद्येत इति, महदनिष्टमापद्येत। एतेन 'कर्तरि कृत्' इति यत्कर्तृग्रहणम्, तदेव लः कर्मणीति सूत्रे चकारेणानुकृष्यते। तत्कथं ण्वुलादीनां लकाराणां शक्तौ वैलक्षण्यम्। अपि च नामार्थयोरभेदसंसर्ग एव ण्वुलादौ कर्तृवाच्यत्वे कारणमित्यभ्युपगमे 'पचतिरूपं देवदत्तः' इत्याद्यनुरोधेन तिङ्ष्वपि वाच्यत्वं कुतो न स्यात्। अपि च तिङ्प्रत्ययस्य नामत्वं नेति ब्रूषे, तदाऽकस्यापि तदभावात्। यद्यस्य संग्रहाय अकान्तं नामेत्युच्यते, तर्हि कल्पबाद्यन्तं नाम स्यादित्यपि वक्तुं शक्यत्वात्।

अपि च नामसंज्ञापन्नसमुदायान्तर्गतयत्किंचिद्धात्वर्थस्यैव नामार्थत्वे अभ्युपगम्यमाने धातोः खण्डशक्तिस्वीकारेणैव फलस्य जनकतासंसर्गेण व्यापारे विशेषणत्वं भवति। तत्र च तिङर्थस्य विशेषणत्वमिति स्वराद्धान्तोऽपि 'पचतिकल्पमि'त्यादौ भवता कथमुपपादनीयः। फल-व्यापाराश्रयाणां नामार्थत्वप्रसङ्गेन मिथो भेदसंसर्गेणान्वयानर्हत्वात्। तथा च

'फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।
फले प्रधानं व्यापारः तिङर्थस्तु विशेषणम्' ॥ इत्यादि

उत्कालितं स्यादिति साधु स्वमतस्थापनम् ।

अपि च फलव्यापारविशिष्टाश्रयस्य वाच्यत्वे कर्तृ-कर्मणोर्वाच्यत्वमापद्येत, फल-व्यापारयोरुपलक्षणत्वे च अनुगतोपलक्षणतावच्छेदकाभावात् । अतः फल-व्यापारयोर्विशेषणत्वोपलक्षणयोर्दुष्टत्वाच्छाब्दिकमतमयुक्तम् । अथ कर्तृशक्तिव्यतिरिक्ता कर्मशक्तिः, तथा चाश्रयपदेन कर्तृकर्मणोरुभयोरभिधानेऽपि कर्तृकर्मशक्तिरूपाश्रयाभिधानानभिधानाभ्यां व्यवस्थेति शाब्दिकैर्वक्तुम् न शक्यते । शक्तिमात्रस्य तदर्थत्वे 'देवदत्तः पचति' इत्यादौ चैत्रादेर्धर्मिणस्तदभेदान्वयानर्हतया 'युष्मद्युपपदे समानाधिकरणे मध्यमः' अस्मद्युत्तमः, इत्यादौ त्वदभिमतस्योक्तसूत्रप्रतिपाद्यस्य सामानाधिकरण्यस्यात्यन्तविलयनेनासिद्ध्यापत्तेः । यदि शाब्दिकः कश्चिद्ब्रूयाच्छक्तिः कारकमिति पक्षस्य आकरग्रन्थेष्वन्यमतत्वेनोपन्यासः, न सिद्धान्ततयेति, सामानाधिकरण्यमुपपन्नमिति । अन्यथा शानजादेरपि शक्तिमात्रवाचित्वे सामानाधिकरण्यं न संघटेत ।

## आश्रयस्य तिङर्थत्वे दूषणम्

अपि चाश्रयत्वस्याऽखण्डत्वे गौरवम् । यतो ह्याश्रयत्वस्य तत्तादाश्रयस्वरूपस्याननुगतत्वात् । ननु द्रव्यत्वादिवदाश्रयपदशक्यतावच्छेदकताऽऽश्रयत्वमखण्डं सिद्ध्यतीति वक्तुं न शक्यते । शक्यतावच्छेदकत्वं नाखण्डत्वस्य साधकम् । अन्यथा विभुपदशक्यतावच्छेदकस्य विभुत्वस्य सखण्डत्वं न स्यात् । आश्रयत्वस्याऽखण्डत्वेऽपि तस्य नियतान्यनिरूपितस्वरूपत्वान्निरूपकभेदेन तत्तदवच्छेदकसम्बन्धभेदेन च भिन्नत्वमेवेत्यननुगमो वज्रलेपायते । एवञ्चानन्तानां शक्यतावच्छेकत्वकल्पनागौरवं दुर्वारमेव ।

## अखण्डोपाधित्वस्याकराद्यसिद्धत्ववर्णनम्

किञ्चाश्रयत्वस्याखण्डोपाधिरूपत्वमाकराद्यसिद्धम्, शक्तेरेवाखण्डताया भाष्यादिसिद्धत्वात् । 'सम्बन्धश्शक्तिरेव वेत्यादिवार्त्तिके तथा प्रतिपादनात् । यद्याधाररूपत्वमाश्रयत्वमतिरिक्तमिति पक्षेणेदम्, न तु शक्त्यभिप्रायेणेति वक्तुम् न शक्यते । अखण्डशक्तिरूपमिति स्ववचनविरोधात् । एवं तृतीयादिविभक्तेराश्रयमात्रवाचित्वे 'कर्तृकरणयोस्तृतीयेत्यादिशास्त्रं विरुध्येत । एवञ्च व्यापाराश्रये, फलाश्रये च कर्तृकर्मपदवृत्त्याश्रयमात्रपरत्वस्य भवताऽभ्युपगमेन,

तिङन्तस्थले भावनामात्रपरत्ववादिनां मते दोषवर्णनानुपपत्तेश्च । यद्युच्येत एकदेशपरत्वमुभयत्र समानमिति, ममोभयत्रैकदेशपरत्वम्, तव त्वेकत्रेत्यर्थवर्णने उभयत्रैकदेशपरत्वापेक्षयैकत्र तत्परताया एवोचितत्वात्।

## शक्तिपक्षे भाष्यस्वारस्यवर्णनम्

अपि च शक्तिः कारकमिति पक्ष एवाऽऽकरादौ सिद्धान्त इति वक्तुम् शक्यते । यतो हि सूत्रकारेण 'सप्तमीपञ्चम्यौ कारकमध्ये' इति सूत्रयता सूत्रे कारकमध्यताया उक्तत्वात्। भाष्यकारोऽपि तमेव पक्षमादाय समाधत्ते स्म । 'समानकर्तृकयोः पूर्वकाले' इत्यादेश्शक्तितद्वतोरभेदोपचारेण काशिकावृत्तिन्यास-कैय्यटादिमहाग्रन्थेषूपपादनाच्च । 'अनभिहिते' इति सूत्रे शक्तिपक्षमाश्रित्यैव व्याख्यानमिति स्पष्टमेवाऽऽकरग्रन्थपरिशीलिनाम् ।

## शक्तिपक्ष इवाखण्डोपाधिपक्षेऽपि सामानाधिकरण्यस्योपपादनम्

अत्र कर्मत्वादीनां विभक्त्यर्थत्वपक्षो भाष्यकार-वार्तिककारादिभिश्चोक्तः । 'चैत्रश्शाकसूपौ पचति, चैत्रेण शाकसूपौ पच्येते' इत्यादौ विरुद्धसंख्यावरोधदर्शनात्कर्तृकर्मणोर्यथाक्रममाख्यातार्थसंख्यान्वयश्रवणादुभयोरेकवचनान्तत्वे ऽपि तेनान्वयोऽवधार्यते, एकत्र निर्णीतश्शास्त्रार्थोऽन्यत्रापि तथेति न्यायात्। अत एव 'यवमयश्चरुर्भवति' इत्यादौ वाक्यशेषाद्दीर्घशूकादिपरत्वेन निर्णीतस्य यवादिपदस्य 'यवमतीरद्भिरौदुम्बरीं प्रोक्षती'त्यादौ वाक्यशेषाभावेऽपि तत्परत्वनिर्णयः । एवञ्च रहस्यकृत् 'समर्थः पदविधिः' इति सूत्रगतं द्वितीयादिविभक्तयः 'क्रिया-कारकयोस्संबन्धस्य वाचिका भवति' इति पातञ्जलभाष्यमाश्रित्य कर्मत्वादिकमेवाखण्डोपाधिरूपं तत्तद्विभक्तिवाच्यमिति निश्चिकाय । अतः आख्यातवाच्या भावना, निरूढलक्षणया कर्ताऽर्थः, तमादायैव लाक्षणिकम् 'युष्मद्युपपदे समानाधिकरणे मध्यमः' इत्यादिनोक्तं सामानाधिकरण्यमुपपद्यते, इति न स्मृतिविरोधः। शाबरभाष्य-तन्त्रवार्तिकयोः; कर्त्रधिकरणे संख्याशास्त्राणाम् 'लः कर्मणि' इत्यादेरेकवाक्यतामङ्गीकृत्य व्याख्यानं कृतम्, तदेव तदनन्तरकालिकग्रन्थेषु न्यायप्रकाशपर्यन्तेषूपलभ्यते। 'जानाति, नश्यति' इत्यादौ यथाऽऽश्रयत्वे, प्रतियोगित्वे च लक्षणा सर्वैरप्यङ्गीक्रियते। तथैव 'रथो गच्छति' इत्यादौ यत्नस्य बाधात् व्यापारे लक्षणा, इति तु दोषपरिहारावुभयोरपि समानौ । किञ्च पचतीत्यादौ पाकं करोतीति पचिधात्वर्थात्पाकात्कृतेः पृथग्भासनात्तत्रैवाख्यातस्य शक्तिरिति युक्तम्। एतेन मनोरमावचनम् 'एवं स्थिते कृतौ शक्तिरित्यस्योक्तिसम्भव एव नास्ति। कृतेरपि व्यापारविशेषतया प्रायेण धातुतो लाभादिति वचनं प्रत्याख्यातमिति प्रौढा० म० ३०३० वेदितव्यम्।

## कर्त्रधिकरण-जञ्जभ्यमानाधिकरणयोर्वैलक्षण्यम्

एवं कर्त्रधिकरणे आख्यातवाच्यत्वं कर्तुर्निरस्य जंजभ्यमानाधिकरणे शानजर्थत्वं स्वीकुर्वन्तो मीमांसकाः प्रत्युक्ता इति कथनमपि बालभाषितमित्यवधेयम्। यतो हि लकाराणां कृतिवाचित्वम्, लादेशादीनां श्याजादीनाम् धर्मिवाचित्वमिति वैषम्येऽनुभवबलकल्प्यश्शब्दशक्तिस्वभाव एव नियामक इति प्रागवादिष्म। तस्माद् "आश्रये तु तिङः स्मृताः' इति शाब्दिकवचनं निरस्य-आख्यातस्य कृत्यपरपर्यायायां भावनायां शक्तिः, कर्तरि निरूढलक्षणेति मीमांसकमतमेव युक्तमुत्पश्यामः।

## कर्त्रधिकरणवर्णनम्

किञ्च 'नानृतं वदेदि'ति वाक्यमुदाहृत्यानृतवदननिषेधः शुद्धपुरुषधर्मः, अथवा क्रतुयुक्तपुरुषधर्मः, शुद्धक्रतुधर्म इति त्रेधा सन्दिह्य, प्रथमपक्षम्, द्वितीयपक्षञ्च निरस्य, शुद्धक्रतुधर्मत्वं व्यवस्थापितम्। तत्र पूर्वपक्षद्वयनिराकरणाय कर्तुर्वाच्यत्वं प्रत्याख्यातम्। तत्र वार्तिके त्रेधा पूर्वपक्षावसरे कर्तुराख्यातवाच्यत्वसाधनेऽपि, तस्य कर्तुर्गुणत्वेनोपादानात्तत्तत्कर्तृकक्रियायाः प्रकरणेन क्रत्वङ्गत्वे बाधकाभावादित्युक्तम्। द्वितीयप्रकारस्तु गुणत्व-प्राधान्ययोरुदासीनत्वेनाख्यातेन कर्तृत्वमात्रमभिधीयते' गुणत्व-प्रधानत्वयोराकांक्षादिभिः पश्चात्कल्पने प्रसक्ते आकांक्षानुरोधेन प्राधान्यमेव कल्प्यत इति द्वितीयः प्रकारः उक्तः। आख्यातार्थस्य कर्तुर्धात्वर्थं प्रति प्रत्ययार्थत्वेन प्राधान्याच्छाब्दबोधे विशेष्यतयाऽवगतं यत् प्राधान्यम्, तदेव प्रयोजनाकांक्षायामपि शक्यं कल्पयितुम्। अतस्समानपदश्रुत्या प्रकरणावगतक्रत्वङ्गत्वबाधेन पुरुषार्थत्वमिति तृतीयः प्रकारः। अत्र पक्षत्रये आख्यातस्य भावनावाचित्वमनङ्गीकृत्य, केवलं कर्तृवाचित्वं शाब्दिकमतेन। तथापि स च प्रत्ययार्थत्वात्प्रकृत्यर्थं वदनं प्रति प्रधानभूत इति पार्थसारथिमिश्रेण कर्त्रधिकरणशास्त्रदीपिकायां तृतीयपक्ष एवाङ्गीकृतः।

शास्त्रदीपिकाकारस्यायमाशयः—वार्तिकोक्तमुत्तरपक्षद्वयमभ्युच्चययुक्तित्वेन तस्य प्राधान्यानुपपत्तेरयुक्तमिति। अत आख्यातस्य कर्तृवाचित्वे प्रत्ययार्थप्राधान्यस्मृत्या सर्वेषामेव प्राधान्यप्राप्तौ 'भावप्रधानमाख्यातम्' इति यास्कस्मृत्या भावनायाः प्राधान्यं नियम्यते। तेन कर्तुः शब्दतोऽप्यप्राधान्ये सिद्धे सुतरामार्थिकप्राधान्यासिद्धिरित्यभिप्रायः।

कर्त्रधिकरणवार्तिकस्यावलम्बने स्मृतिव्याख्यानम्, द्व्येकयोरित्यत्र भावाप्रधाननिर्देशस्यानावश्यकत्वकथनञ्च 'लः कर्मणी'ति सूत्र मूले व्याख्याने च भाष्य-वार्त्तिक-शास्त्रदीपिका-भाट्टदीपिकादिषु-रहस्ये च बहुधा व्याख्यातमिति

नेह प्रतन्यते। एवञ्च प्रकरणादनृतवदनप्रतिषेधः क्रत्वर्थ इति तदधिकरणसिद्धान्तः।

## प्रयोजननिरूपणम्

सिद्धान्तस्य प्रयोजनमाद्यपक्षे स्मार्तप्रायश्चित्तम्। क्रतुयुक्तपुरुषधर्मत्वे 'याजमानास्तु तत्प्रधानत्वात्कर्मत्वात्' [मी० द० ३.७-१] इति तार्तीयाधिकरणन्यायेन समाख्याया गुणभूतकर्तृत्वप्राप्तौ नियामकत्वं भवतीति प्रधानभूतस्य यजमानस्यैव प्राप्तेर्नाध्वर्युनियमः सम्भवति। स्तोत्र-शस्त्र-जपादीनामौद्गात्राध्वर्यवादिसमाख्याबाधेन दन्तधावनादिवद्यजमानकर्तृकत्वमेव, नाध्वर्युकर्तृकत्वमिति विशेष इति द्वितीयपक्षस्य प्रयोजनमुक्तम्।

शुद्धक्रतुधर्म इति तृतीये सिद्धान्तपक्ष इदं प्रयोजनं तत्तद्याजमानादिकर्तृकत्वप्रापकसमाख्यादिप्रमाणान्तरसत्त्वे सत्यप्यध्वर्युकाण्डपठितत्वेनाध्वर्योर्नियमः। तदभावे तु सर्वथा न तया समाख्ययाऽध्वर्युनियम इति विधिषु व्यवस्था। निषेधेषु तु निषेधस्यानुष्ठेयत्वाभावाद्गुणभूतत्वेन कर्त्रनपेक्षणात्समाख्याया नियामकत्वं न सम्भवति। अतो यत्रैव प्राप्तिः क्रतोरनृतस्य तत्रैव निषेधकरणात्, यजमानस्य, ऋत्विजां च तत्प्राप्तेः। सर्वैः क्रतुसम्बन्धिभिः कर्तृभिर्निषेधपरिपालनं कर्तव्यमिति प्रयोजनम्। अयमेवाभिप्रायः कर्त्रधिकरणावसाने प्रयोजनमित्यादिनोपन्यस्तः। तथा च तत्रत्योऽयं ग्रन्थः—'प्रयोजनं त्वाद्यपक्षे स्मार्तं प्रायश्चित्तम्। क्रतुयुक्तपुरुषधर्मत्वे फलिसंस्कारत्वाद्यजमानेनैव विधिप्रतिषेधार्थसंपादनं कर्तव्यम्; न तु समाख्ययाऽध्वर्युनियमः। शुद्धक्रतुधर्मत्वे तु विधिषु सति सम्भवे तया नियमः। निषेधेषु तु तस्याः नियामकत्वासम्भवात्कर्तृमात्रेण वर्जयितव्यमिति' [भा० दी० अ० ३,पा० ४, अ० ८,]।

एतेन 'तिङर्थस्तु विशेषणमि'त्यादेः परिहृतत्वात्। 'न हि गुणभूतः कर्ता निषेधं स्वाङ्गत्वेन गृहीतुमलम्। भावना तु प्रधानभूता तं ग्रहीतुं समर्थेति प्रकरणात्क्रत्वर्थतैव। अस्तु वा क्रतुयुक्तपुरुषधर्मो, अनुष्ठाने विशेषाभावादिति। इति भूषणसारवचनं आमूलविशीर्णमिति वेदितव्यम्।

## द्व्येकयोरित्यत्र भावप्रधानस्वीकारोऽपि कर्तुराख्यातवाच्यत्वे प्रतिकूलमिति कथनम्

किञ्च कर्त्रधिकरणे आख्यातेन भावनाऽभिधीयते, न कर्ता, या त्वाख्यातात्कर्तुः प्रतीतिर्जायते, साऽऽख्याताभिहितया भावनया, येन विना यन्न संभवति,

तत्तेनाक्षिप्यत इति न्यायेन कर्तुरुपस्थापनादन्यथा सिद्धा। लः कर्मणीति पाणिनीयम् स्मरणन्तु वाच्यत्व-द्योत्यत्वयोरुदासीनं दृश्यते।

किञ्च लः कर्मणीत्यभिधाय 'द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनमिति' सूत्राभ्यां द्वित्वैकत्वयोरर्थयोर्द्विवचनैकवचनविधानात् कर्तृसंख्यैवाख्यातवाच्या, न कर्तेति शब्दस्वारस्येन प्रतीयते, वैयाकरणाभिमतव्याख्यानसमाश्रयणे संख्येयकर्तृविवक्षणे द्व्येकेष्विति स्यात्, द्वयोरेकस्य कर्तॄणां बहुत्वात्। एवञ्चाख्यातस्य न कर्तृवाचित्वम्।

## कर्तुरनभिधाने शंका-परिहारौ

यत्तु कर्तुरनभिधानेऽनभिहिताधिकारविहिता तृतीया स्यात्, पचति देवदत्तेनेतिप्रयोगप्रसंगः, गम्यमानस्य कर्तुस्संख्याया अनेनाभिधाने, करणादिगतसंख्यायामप्यभिधानप्रसंगः, पच्यते इत्यत्रापि कर्मणो गम्यमानत्वात्तद्संख्याया अपि अभिधानप्रसंग इति शाब्दिकानामाक्षेपः।

तत्प्रतिक्षेपप्रकारश्चेत्थम्। तथाहि—आख्यातेनाऽनभिहितोपि कर्ता इतरकारकापेक्षया प्रधानं भवति, अत्रायं नियमः—यत्प्रधानं कारकम्, तत्संख्याऽऽख्यातेनाभिधीयत इति। आख्यातवाच्या भावना कर्तुर्व्यापारः इत्याख्यातेन प्राधान्येन कर्ता द्योत्यते। अनभिहिते इत्यधिकारस्य प्राधान्येन द्योतितत्वाभिप्रायत्वात्। एवञ्च 'चैत्रः पचती'त्यत्र कतुः प्राधान्यात्, तिङा तद्गता संख्या तेनाभिधीयते, अभिहितत्वात् चैत्र इति प्रथमैव, न तृतीया, पच्यन्ते तण्डुलाः इत्यत्र कर्मणः प्राधान्यात्संख्या तेनाऽभिधीयते, करणादीनां सर्वत्राऽप्राधान्यात्, क्वाप्याख्यातेन तदभिधानप्रसंग इति, कर्तुरनभिधेयत्वे न किञ्चिद्दूषणम्, अपितु भूषणमेवेति।

## अरुणाधिकरणविषये भूषणसारमतसमालोचनम्

शेषलक्षणे—'अर्थैकत्वाद्द्रव्यगुणयोरैककर्म्यान्नियमस्स्यात्' इत्यधिकरणे अरुणया पिङ्गाक्ष्या सोमं क्रीणाति' इति वाक्यमुदाहृत्य विचारितं यत्—आरुण्यस्य गुणत्वेनामूर्तत्वात्क्रयभावनायां करणत्वेनान्वयो न सम्भवति, अतो वाक्याद्विच्छिद्यप्राकरणिकेषु द्रव्येषु निवेश इति पूर्वपक्षयित्वा, अरुणयेति तृतीयानिर्देशात्तृतीयाश्रुत्या आरुण्यस्यकरणत्वेन क्रयभावनायामन्वयः। शाब्दबोधे भावनायाः एव मुख्यविशेष्यत्वात्। 'भावनैव हि वाक्यार्थः' इति वार्तिकात्। ततो द्रव्यस्य परिच्छेदकाकांक्षायाम्, गुणस्य परिच्छेद्याकांक्षायां द्रव्य-गुणयोरैकक्रयभावनारुपैककर्म्यादेकक्रयार्थत्वाद्द्वितीयबोधे परस्परमन्वय इति तत्रत्या मर्यादा।

अत्र भूषणसारो ब्रवीति—'आरुण्यस्य स्ववाक्योपात्ते द्रव्ये एवान्वयप्रतिपादकारुणाधिकरणोच्छेदापत्तिरिति'। इदन्त्वविमृश्यमानसुन्दरम्। यतो ह्यधिकरणमिदं गुणस्य भावनान्वयप्रतिपादनार्थमितिसिद्धान्तं लेशमात्रेणापि न स्पृशतीदं दूषणम्। तत्राधिकरणे श्रुत्या विनियोगः, न तु वाक्यादिना। तत्र यौगिकशब्दानां द्रव्यवाचित्वम्, बहुव्रीहेरन्यपदार्थे शक्तिः, लक्षणा वेत्यादिकम् प्रमेयजातं वार्तिके संगृहीतमस्ति। तच्चास्यामेव भूमिकायां व्यवस्थापितमिति नेह प्रतन्यते। एतेन 'देवदत्तः पचति' इत्यादिसामानाधिकरण्योपपत्तये आख्यातस्य कर्तृवाचित्वं 'पक्ता देवदत्तः' इत्यादिवदित्यादिकं सर्वं सर्वत्र वैषम्ये अर्थात्क्वचिदाख्यातस्य कृतौ शक्तिः, कृदादेः कर्तरि शक्तिरित्यनुभवबलकल्प्यः शब्दशक्तिस्वभाव एव नियामक इति। एतेन 'तदभावेऽपि बोधो नेह निवार्यते' इत्यादिकं चिकित्सितमिति मन्तव्यम्। एवञ्च प्रतीति-सामानाधिकरण्य-स्मृतिविरोधानां परिहारात् भावनाया आख्यातवाच्यत्वे न कश्चिद्दोषः।

अपि च व्याकरणशास्त्रं नियमद्वयप्रतिपादकम्-'साधूनेव प्रयुञ्जीत, नासाधून्' इति एकः प्रयोगनियमः, गवादय एव साधवः, न गाव्यादय इति अपरः साधुनियमः, असति बाधके शक्तिग्राहकत्वं व्याकरणस्य, अयमर्थः समानायामर्थावगतौ इति पस्पशायां स्पष्टः।
अत एव शास्त्रदीपिकायाम्—

'प्रतीतेः स्मरणात् कर्तृविशेषैरपृथक्श्रुतेः।
कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते' ॥ इति

इति कर्त्रधिकरणे पूर्वपक्षे अभिधाय, सिद्धान्ते आख्यातस्य क्रियापरपर्यायभावनावाचित्वं व्यवस्थापितम्, कर्तुराक्षेपलभ्यत्वेन न वाच्यत्वमिति। तथा च श्लोकः—

'आख्यातप्रत्ययाः सर्वे क्रियाया अभिधायकाः।
तत एव प्रतीतस्य न कर्तुरभिधेयता'॥ इत्यादिना

अस्य सूत्रस्य व्याख्यानप्रकारः प्रतिपादितः। खण्डदेवाचार्योऽपि तस्मिन्नधिकरणे मीमांसकसम्मतं सूत्रव्याख्यानं वर्णयामास, तदवगतये चास्माभिष्टिप्पण्यामधिकरणार्थः भाट्टदीपिकातः संगृहीत इति, पृ० ४१-४४ एवावगन्तव्यम्।

## धात्वर्थारिक्ता भावना नास्तीत्याक्षेपः

संग्रहरुचीनां जिज्ञासूनाञ्च सौकरीमभिप्रेत्य भावनाविवेकानुसारेण संग्रहेण प्रदर्श्यते। तत्र वैयाकरणा धात्वर्थातिरिक्ता आख्यातप्रत्ययवाच्या भावना नास्ति इति वदन्तः पूर्वपक्षमारचयन्ति।

तथाहि—आख्यातसामानाधिकरण्यमर्थात् पचति पाकं करोतीति करोति-पचत्योःभावनार्थकत्वं न साधयितुमिष्टं। अपि तु तद्विशेषवाचकत्वमेव। यथा वृक्षः शिंशपा इति प्रयोगे वृक्षसमानाधिकरणः शिंशपावृक्षः नावृक्षार्थको दृश्यते। किन्तु तद्विशेषार्थक इति सार्वजनीनमेतत्। अतः करोतिसामानाधिकरण्यं न तदर्थसाधकम्।

किञ्च पचतीत्यादौ एकरूपमाख्यातम् दृश्यते, न विशेषवचने समर्थं भवितुमर्हति। धातवो भिन्नरूपा एव भावनाविशेषवचनाः करोतिसमानाधि-करणा इति। किञ्च करोतेर्भावनावाचित्वे युज्यते तत्सामानाधिकरण्यात् पचत्या-देर्भावनवाचित्वमनुमातुम, तदेव न सम्भवति। करोतेः भावनां विनापि प्रयोगः दृश्यते। किं करोति घण्टा, ध्वनतीति प्रश्नोत्तरे दरीदृश्येते। अत्र धात्वर्थात् ध्वनेः भिन्नो भावना नाम कश्चन पदार्थो नावगम्यते। एवमेव का क्रिया इति प्रश्ने, पाक इति उत्तरं अख्याताभावात् भावनां न प्रतिपादयति, धात्वर्थमात्रम् प्रतिपादयति। अतः करोतिर्न भावनावचनः।

अत एवाह भगवान् पतञ्जलिः—कथं ज्ञायते क्रियावचनाः पचत्यादयः? इति प्रश्नमुत्थाप्य कुम्बस्तयः क्रियाः सामान्यवचनाः, पचत्यादयः क्रिया-विशेषवचनाश्च इति। अतः करोतेर्भावनावाचित्वं न युज्यते। किञ्च 'यजेत स्वर्गकामः' इत्यादौ साध्यस्वर्गसमर्थो व्यापारो यागादन्यो न कश्चिद् प्रतीयते। अतो धात्वर्थ एव तादृशभावनापदवाच्यः। यद्युच्येत धात्वर्थस्य व्यापाररूपत्वेन न भावनात्वमिति, तर्ह्यभिधीयतां कोऽसौ व्यापारशब्दार्थ इति। यदि समीहित-जननसमर्थसाध्यस्वभावः कश्चन धर्म इति मतम्, तदा धात्वर्थस्तथाविधः एवेति, न ततोतिरिच्यते भावना—इति। यदि स्पन्दः, प्रयत्नो वा भावना इति मन्यते, आद्ये यजेत इत्यादिषु भावनाया आभावः प्रसज्येत। द्वितीये रथो गच्छतीत्यादौ आख्यातस्य प्रयोगो नोपपद्येत। न चात्र औपचारिक आख्यात-प्रयोग इति वक्तुं शक्यते। आख्यातप्रत्यये वैलक्षण्यादर्शनात्।

किञ्च प्रयत्नो भावना इत्यस्मिन् पक्षे प्रयत्नस्य धात्वर्थनिष्पत्ति-पर्यवसन्नतया धात्वर्थस्य तं प्रति कर्मत्वमेव स्यात्, न तु करणत्वमिति। यदि धात्वर्थादर्थान्तरभूता भावना, तर्हि पचतीत्यत्र धात्वर्थसाध्यतया प्रतीयत इति तस्याः कियारूपत्वमङ्गीकर्तव्यम्।

तत्र आख्यातस्यापि क्रियार्थतया क्रियाद्वयं प्रतीयेत। न च प्रतीयते, तस्मान्नातिरिच्यत इति। काष्ठैः पचति इति धात्वर्थे काष्ठानां सम्बन्धः सम्भवति, कारकाणां क्रिययैवान्वय इति स्वीकारात्। तस्य च क्रियारूपत्वम् नाङ्गीक्रियते। वाजपेयाधिकरणादौ धात्वर्थस्य कारकत्वव्यवस्थापनात्। न वा आख्यातवाच्यभावनायामन्वयः सम्भवति, समानपदोपात्तेन धात्वर्थेन करणेनावरुद्धत्वात्, भिन्नपदोपात्तानां करणत्वेनान्वयासम्भवाच्च।

अतो धात्वर्थातिरिक्ता भावना नास्ति, किन्तु कर्तृव्यापार एव भावना, पचतीत्यादौ पच्यर्थः–अधिश्रयणादिरेव, अन्यथा विक्लिद्यतेरविशिष्टार्थत्वप्रसङ्गात्। तस्मात् धात्वर्थतिरिक्ता भावना नास्ति इति शाब्दिकानां शंका।

## धात्वर्थातिरिक्ताया भावनायाः प्रतिपादनम्

अत्रेदं समाधानम्—

धात्वर्थातिरिक्ता आख्यातपदवाच्या भावना समस्ति। तथाहि–किं करोति इति प्रश्नस्य पचतीत्युत्तरदर्शनात्, करोति-पचत्योस्सामानाधिकरण्यं प्रसिद्धम्। तत्र करोत्यर्थो भावना तत्समानाधिकरणतया पचतीत्यस्यापि भावनावाचित्वमेषितव्यम्। तत्र किं धातोः अथवा आख्यातप्रत्ययस्य इति जिज्ञासायाम् पच्यादिधातूनां नानार्थत्वेनाननुगमात् आख्यातस्य सर्वत्रानुगतत्वात्, स एव भावनावचनः, न तु धातुरिति। तस्मात् सामानाधिकरण्यात् आख्यातस्य भावनावाचित्वमिति सिद्धान्तः।

किञ्च घटं करोतीत्यादौ कृधातोः क्रियासामान्यवाचित्वं संघटते! अन्यथा घटमिति कर्मणोऽन्वयो न स्यात्, नहि क्रियासामान्यं किञ्चित् समान्यमपेक्षते, विशेषमेवापेक्षते। न च घटो धात्वर्थविशेषः, येन तेनान्वियात्। तस्मात् करोतेः, धात्वर्थसामान्यातिरिक्तभावनावाचित्वेन पचत्यादिसामानाधिकरणस्यापि तस्य भावनावाचित्वं सिध्यति। अपि च भावनाविशेषप्रतिपत्तावपि सामान्यस्यैव वाच्यत्वमिति। यतो हि प्रत्ययेन विशेषावच्छिन्नं सामान्यं प्रतीयते, न सामान्यमात्रम्। अत एव को राजा याति, पाञ्चालराज इति सामानाधिकरण्यं दृश्यते।

## द्वितीयहेतोर्निरासः

यदुक्तम्—पूर्वपक्षिणा किं करोति घण्टा, का क्रिया, पाकः इत्यत्र साध्यस्यअभावेन तदविनाभूताया भावनाया अभावेऽपि करोतेः प्रयोगदर्शनात्, न भावना करोत्यर्थ इति। अत्राभिदध्महे–अत्रापि भावना अस्त्येव ध्वननेन दुःखादिज-

ननाद्यदि तु तन्न विवक्षितं इत्यभिप्रेयते, तदापि धात्वर्थ एव तत्र साध्यं भवतीति साध्यात्मिका भावनाऽवगम्यत एव। नहि सर्वत्र धात्वर्थो भावनायाः करणमिति न निर्बन्धः। 'दध्ना जुहोती'त्यादौ कर्मत्वस्यापि दर्शनात्। ततश्चैवं वक्तव्यम्-यत्र भावनासाध्यं फलान्तरं न प्रतीयते, तत्र धात्वर्थः करणम्, यत्र तु न प्रतीयते, तत्र धात्वर्थस्यैव साध्यत्वमिति विवेकः। एवं पाक इत्यत्रापि अस्त्येव पाक-करणिका भावना, सा आख्यातादवगम्यते, तथा तद्वाचकस्य आख्यात-पदस्याभावात् पाकेन लक्ष्यत इत्येव विशेषः।

## तृतीयहेतोर्निरासः

यदुक्तं पूर्वपक्षिणा—विशेषवाचित्वमेव वृक्षश्शिंशपा इति दर्शनादिति। तन्न युज्यते-प्रत्ययेन भावनाया अभिधानात्। तत्र पचति विक्लिद्यन्ति इत्यादौ कर्तृभेदेन व्यापारभेदः, स च व्यापारो धातुवाच्य इति शाब्दिकानां मतम्। प्रत्ययवाच्य इति मीमांसकानां मतम्। ततः किं युक्तं इति विचारणा जायते। अत्रेत्थं विवेक्तव्यम्—पाकः, यागः, पच्यन्ते तण्डुलाः स्वयमेव, यजते यजमानः इत्यादिप्रयोगेषु विक्लित्तिमात्रम् संकल्पमात्रं स्वीकार्यम्। पचतीत्यादौ पाकं करोतीति विवरणदर्शनात् पाकाद्यतिरिक्तः तन्निर्वर्तनरूपो व्यापारः प्रतीयते। स च न धातोरर्थः, पाकादिशब्दाददर्शनेन व्यभिचारात्। ततः प्रत्ययार्थ इति निश्चिनुमः। व्यापारस्य प्राधान्यात् प्रत्ययार्थता युज्यत एव

किञ्चधात्वर्थस्यैव भावनात्वे 'अश्वमेधेन यजेते'त्यादौ धात्वर्थस्य तृतीयादिश्रुत्या कारकावगमात् साध्यरूपायाः भावनायाः कारकत्वं न सम्भवति। धात्वर्थातिरिक्तां भावनां प्रत्येव करणत्वेनान्वयो वक्तव्यः। तदर्थमेव धात्वर्थातिरिक्तभावनाऽनिच्छितापि स्वीकार्या-इति।

नापि क्रियाद्वयप्रतिपत्तिः, न वा सम्बन्धानुपपत्तिः स्वतः, सिद्धरूपस्य धात्वर्थस्य, भावनायां करणतया अन्वयः स्वीक्रियते। यत्तु-प्रयत्नः, स्पन्दो वा भावनेति, विकल्प्य दूषितं पूर्वपक्षिणा, तन्न विचारसहम्। न वयं परिस्पन्दम्, प्रयत्नं वा भावनां ब्रूमः, अपि तु उभयानुगतं औदासीन्यविच्छेदसामान्य-रूपम्। अतो धात्वर्थातिरिक्तायाः सिद्धौ न किञ्चिद् बाधकम्।

यथोक्तम्—

'अनेकार्थत्वमन्याय्यं तेनैकाधिकरण्यतः।
करोतिना तिङन्तेषु भावभेदोऽभिधीयते॥
उदासीनत्वविच्छेदसामान्यात्मा ततो मतः।
करोत्यर्थो द्वयोश्चेह तद्रूपः प्रत्ययो भवेद्'॥

भा० वि० श्लो० सं० २२-४८, इति।

यथोक्तमाचार्यखण्डदेवेन भावार्थाधिकरणकौस्तुभे—

'द्रव्यत्यागाद्धुतवहमुखक्षेपणाच्चातिशस्ता
निष्प्रत्यूहं विधिपरिचिता भावनेयं चकास्ति ।
यस्यास्संगाददतिशयफलप्रापि यागादिजातम्
तामद्याहं मुररिपुपदद्वंद्वपद्मेऽर्पयामि' ॥

मी० कौ० २ अ० पृ० ४४ इति ।

## वैयाकरणानाम्, भाट्टमीमांसकानाञ्च विप्रतिपन्ना विषया इमे—

१—आख्यातार्थ आश्रय इति वैयाकरणाः, भावनेति भाट्टमीमांसकाः ।

२—धात्वर्थ एव शाब्दबोधे मुख्यविशेषतया भासते इति वैयाकरणाः, भावनैव मुख्यविशेष्यतया भासत इति मीमांसकाः ।

३—भावप्रधानमाख्यातमिति यास्कस्मृतेः धात्वर्थपरतया शाब्दिकानाम् व्याख्यानम्, आख्यातवाच्यभावनाप्राधान्यपरतया मीमांसकानां व्याख्यानम् ।

४—लः कर्मणि च भावे चाकर्मकेभ्यः इति सूत्रव्याख्याने उभयोर्वैलक्षण्यमित्येते विषया विचारिता एतावता प्रबन्धेन ।

१—सांप्रतं समासशक्तिस्वीकारः शाब्दिकानाम्, तदनुपगमो मीमांसकानाम् ।

२—तन्मते तदभ्युपगमे मीमांसाधिकरणानां विरोधशंका, तदुक्तानां परिहाराणामाभासीकरणम्, स्वमते तेषामुपपादनम् ।

३—निपातानां वाचकत्वम्, उपसर्गाणां द्योतकत्वमिति शाब्दिकानाम् व्यवस्था, तत्र मीमांसकानामनास्थाप्रदर्शनम् ।

४—उद्देश्यविशेषणमविवक्षितम्, उपादेयविशेषणं विवक्षितमिति यथाश्रुतस्य नियमस्य दोषप्रकाशनं शाब्दिकमतेनाऽनियम इति सिद्धान्तः, मीमांसकमते तन्निरासः, समाधानञ्च,

५—उपरि निर्दिष्टेषु विषयेषु मूले टिप्पण्याञ्च शंका-समाधानाभ्याम् यस्य विवेचनं कृतम्, तदुपेक्ष्य, अवशिष्टा विषयाः क्रमेण विचार्यन्ते ।

## वैयाकरणमतेन समासे शक्तेरुपपादनम्

समासश्चतुर्विधः—अव्ययीभाव-तत्पुरुष-द्वन्द्व-बहुव्रीहिभेदादिति प्राचीनानां प्रवादः, वस्तुतस्तु समासाः षट्, एषु समासेषु 'समर्थः पदविधिः' इति महाधिकारेण एकार्थीभावलक्षणं सामर्थ्यमादाय समासादिवृत्तयो विधीयन्ते ।

'समर्थः पदविधिरि'त्यस्याऽयमर्थः-पदोद्देशेन विधीयमानः समासादिः, समर्थः-विग्रहवाक्यार्थाभिधाने शक्तिं प्राप्त इति सूत्रस्यार्थः। सामर्थ्यं द्विविधम्—व्यपेक्षा-लक्षणम्, एकार्थीभावसामर्थ्यलक्षणञ्चेति। तत्र व्यपेक्षालक्षणं वाक्ये भवति, एकार्थीभावलक्षणञ्च सामर्थ्यं समासे, एकार्थीभावश्च समस्यमानपदयोः संभूय विशिष्टैकार्थप्रतिपादकत्वम्। तस्मात् समासेषु विशिष्टा शक्तिरङ्गीक्रियते।

अपि च समासे शक्त्यनङ्गीकारे 'अर्थवदधातुरप्रत्ययः प्रातिपदिकमि'-त्यनेन प्रातिपदिकसंज्ञा न स्यात्, वृत्त्या अर्थविषयकबोधजनकत्वरूपमर्थवत्त्व-मर्थवत्सूत्रे विवक्षितम्। तेन समासे शक्त्यनङ्गीकारे प्रातिपदिकसंज्ञा न सिद्ध्येत्। न च शङ्कनीयं कृत्तद्धितसमासाश्चेत्यनेन प्रातिपदिकसंज्ञा स्यात्, न समासे शक्तिर्युक्तेति। कृत्तद्धितसमासाश्चेति सूत्रे समासग्रहणस्य नियमार्थ-त्वमाकरादौ व्यवस्थापितम्। अतः समासे शक्तिरावश्यकी—इति।

## समासशक्तेरनुपपत्त्या निरासः

अत्र ब्रूमः—समासेषु समासघटकीभूतपदादेवार्थबोधसम्भवे तत्र शक्तिकल्पनं न युज्यते, गौरवात्। गौतमीयैरपि अत्र विषये बहु पराक्रान्तमिति, नात्र लेखनी व्यापार्यते। तथा च सूत्रार्थः-पदोद्देशेन विधीयमानः समासादिः, समर्थः-स्वार्थवाचकपदनिष्ठ इति। अत्र केचित्कौमारिलमतानुसारिणो मन्यन्ते-अरुणाधिकरणपर्यालोचनया बहुव्रीहौ शक्तिरेव, तस्य मतुबर्थसमानार्थकत्वात्, मतुबो गोमाँश्चैत्र इत्यादौ अभेदान्वयाविरोधाय सम्बन्धिवाचकत्वस्यावश्य-कत्वात्।अतः 'सर्वोप्युत्सर्गः सापवादः' इति न्यायेन समासे शक्त्यनङ्गीकारेऽपि, बहुव्रीहावन्यपदार्थे शक्तिः स्वीक्रियते।

एवं सति भक्षपेटिकायामिन्द्रपीताधिकरणे इन्द्रपीतपदे इन्द्रेण पीतः, इन्द्रपीत इति तत्पुरुषः, इन्द्रेण पीतः सोमः यस्मिन् सवने इति बहुव्रीहिर्वेति संदिह्य, तत्पुरुषे उत्तरपदे लक्षणा, पूर्वपदं तात्पर्यग्राहकम्, बहुव्रीहौ तु अन्यपदार्थे शक्तिः, अतस्तत्पुरुषापेक्षया बहुव्रीहेः प्राबल्याल्लाघव-मुक्तं सङ्गच्छते—इति।

## उक्तार्थस्य केषाञ्चिन्मतेन प्रदर्शनम्

अपरे तु 'सर्वत्र यौगिकैः शब्दैः द्रव्यमेवाभिधीयते' इति वार्तिकम् प्रमाणयन्तः सर्वेषां कृत्तद्धितसमासरूपयौगिकशब्दानां द्रव्ये शक्तिरिति पूर्वोक्तमेव पक्षं प्रकारान्तरेण समर्थयन्ते,

### बहुव्रीहौ शक्तिमनभ्युपगच्छतामेकदेशिनाम्मतम्

अपरे तु उपर्युद्धृतस्य वार्तिकस्य अनिर्ज्ञातशक्तिकैकदेशयौगिकशब्दपरमिदं वार्तिकमिति तात्पर्यं वर्णयन्तो द्रव्ये लक्षणा, अतः क्वचित् बहुव्रीहौ लक्षणेति वर्णयन्ति। न चैवं पूर्वोक्ताधिकरणविरोधः शङ्कनीयः, तत्र इन्द्रपीतपदे तत्पुरुषेऽपि पूर्वपदलक्षणया, पीतपदे हुताहुतशेषलक्षणया च लक्षणाद्वयमापद्यते, बहुव्रीहौ एका लक्षणा इति लाक्षणिकबहुव्रीह्यपेक्षया लक्षणाद्वयापादकस्य तत्पुरुषस्य दुर्बलत्वात् सिद्धान्तसङ्गतिरिति । अत एव निषादस्थपत्यधिकरणे लक्षणापत्त्या तत्पुरुषात् कर्मधारयस्य प्राबल्यमुक्तम्,[1] अतः क्वचित् बहुव्रीहौ लक्षणामातिष्ठन्ते ।

### अस्मिन्विषये भाट्टचिन्तामणिकारमतम्

भाट्टचिन्तामणिकारस्तु अत्र प्रकारान्तरमाह—समासेषु न शक्तिः, न वा लक्षणा, अपि तु समासोपस्थापितविग्रहवाक्यादेव बोधो जायते । यथा श्लोकादौ अन्वयो वाक्यात् । उदाजहार च रामेश्वरः—इति ।

अत्र—

'रामस्तत्पुरुषं प्राह बहुव्रीहिं महेश्वरः ।
अन्ये तु महर्षयः सर्वे कर्मधारयमूचिरे' ॥

इत्यादौ तादृशविग्रहवाक्योपस्थित्यैव बोधो जायते। एवञ्च विग्रहवाक्यसंदेहे बोधसंदेहोऽप्युपपद्यते । अतः समासवाक्यस्य विग्रहवाक्योपस्थित्या बोधजनकत्वमुपपद्यते—इति ।

### विशिष्टविधौ तात्पर्यग्राहकमेव भेदहेतुः, न त्वेकप्रसरताभङ्गः, स चान्वाचयहेतुरिति प्रतिपादनम्

एवम् 'त्र्यङ्गैः स्विष्टकृतं जुहोति' इत्यत्र एकप्रसरताभङ्गभयेन विशिष्टविधानमिति दाशमिकः सिद्धान्तः समासशक्तिं विनापि निर्वहति, अत्र त्र्यङ्गसमासेऽङ्गोद्देशेन त्रित्वविधावेकप्रसरता भज्येत, अतस्तत्र त्रित्वविशिष्टाङ्गविधिः, तत्रापि एकप्रसरताभङ्गो मूलयुक्तिर्न भवति, 'लोहितोष्णीषा मृत्विजः प्रचरन्ती'त्यत्र समासेऽपि विध्यन्तरप्राप्तोष्णीषानुवादेन लौहित्यविधिरङ्गीक्रियते, यथा वा अश्वाभिधानी, सोमिलिप्तमित्यादौ, तथा प्रकृतेऽपि अङ्गोद्देशेन त्रित्वविधिप्रसङ्गात् ।

---

१—निषादस्थपतिपदेन षष्ठीतत्पुरुषे पूर्वपदे लक्षणापत्तेः, निषादश्चासौ स्थपतिश्चेति कर्मधारय एव ।

अत एवं वक्तव्यम्—'जायमानो वै ब्राह्मणः त्रिभिः ऋणवा जायते' इति उपक्रम्याम्नातस्य 'दोः पूर्वार्धस्य, गुदं मध्यतः, श्रोणी जघनार्धस्य' इति वाक्यशेषे अनिज्याशेषाणामङ्गानां श्रवणात् तदन्यथानुपपत्त्या तत्र विधिः कल्प्यते, अनेन वाक्येन दोः प्रभृतीनां 'दोः पूर्वार्द्धस्याग्रे अवद्यति' इति एकावदानक्रियासम्बन्धे त्रित्वं क्लप्तम्। अत उक्तवाक्यशेषस्य बाधो माभूदित्यस्य विशिष्टविधित्वमङ्गीक्रियते, त्र्यङ्गैरित्यत्र प्रधानयागशेषाङ्गानुवादेन त्रित्वविधौ अनिज्याशेषाङ्गान्तराम्नानस्याऽर्थवादविधयाऽपि अन्वयायोगात्। एवञ्च तत्र विशिष्टविधिरङ्गीक्रियते, यत्र विशिष्टघटकानां विधेयत्वमस्ति, यथा त्र्यङ्गैरित्यत्र, तत्र अनिज्याशेषाङ्गानां त्रित्वस्य च विशिष्टविध्युन्नीतविध्यन्तरेण विधिसम्भवात्। अतः समासशक्त्यनङ्गीकारे पूर्वोक्ताधिकरणानां नासङ्गतिर्मीमांसकानां मते, असङ्गतिश्च शाब्दिकानां मत एवेति ध्येयं विज्ञैः। अतो मीमांसकानाम् पद्धत्यैवाधिकरणरचना सञ्जाघटीति, न तु शाब्दिकरीत्येति, एवञ्च इन्द्रपीताधिकरण–निषादस्थपत्यधिकरणयोरसङ्गतिः स्पष्टैवेत्यवोचाम।

## तद्धितार्थविचारः

'सास्य देवते'ति पाणिनीयं स्मरणम्, तत्र [1]"सूक्तहविषोरिष्यते' इति वार्तिकं पठितम्। अत्र सूत्रे अस्येति षष्ठ्यन्तं पदं श्रूयते, इदंशब्दार्थो हविः, हविःसम्बिन्धिनी देवता इति यथाश्रुतार्थः प्रतीयते। परं 'आग्नेयोऽष्टाकपालः, ऐन्द्रं पयः, ऐन्द्रं दधि, सौम्यः चरुः' इति द्रव्यविशेषवाचिपदसामानाधिकरण्येन तद्धितान्तपदप्रयोगो दृश्यते, अतोऽस्य सूत्रस्य तस्या देवतायाः संबन्धि इदं हविरित्यर्थे तद्धितो भवतीति विपरिणामेनाऽर्थो विवक्षितः। एवञ्च देवतासम्बन्धीदं हविरित्यर्थः फलति, तेन तद्धितस्य देवताविशिष्टे द्रव्यविशेषे शक्तिरिति।

## तत्र मतभेदनिरूपणम्

अत्र प्राचीनैः तद्धितान्तपदस्य अर्थप्रतिपादन एकः पक्ष उक्तः—देवतात्वविशिष्टे द्रव्यविशेषे शक्तिः, आमिक्षादिपदञ्च तात्पर्यग्राहकमिति। नवीनैस्तु चत्वारः पक्षा उपन्यस्ताः। तथाहि—द्रव्यत्वे, देवतात्वे च भिन्नभिन्ना शक्तिः नागृहीतविशेषणान्यायेन। तदाश्रययोः देवता-

---

[1] सूक्तहविषोरेव देवतातद्धित इति कात्यायनवचनं नास्तीति वैश्वदेवाधिकरणेऽध्वरमीमांसाकौतूहलं वदति, हेतुञ्चोपन्यस्यति पातञ्जलभाष्यादावदर्शनादिति, परन्तु भाष्यवार्तिकशास्त्रदीपिकादिषु दर्शनादस्माभिरपि निर्देशः कृतः।

विशेष-द्रव्यविशेषयोर्व्यक्तिन्यायेन निरुढलक्षणया बोधः, तथा प्राप्तयोः विशेष-समर्पकस्तद्धितप्रकृतिः तद्धितान्तपदसमानाधिकरणपदान्तरञ्चेति प्रथमः । देवतात्वे शक्तिः, द्रव्ये लक्षणेति द्वितीयः । द्रव्यविशेषे शक्तिः, देवतात्वे लक्षणेति तृतीयः । देवतासामान्ये शक्तिः, अभिक्षापदेन विशेषनिर्णय इति चतुर्थः, आहत्य पञ्च पक्षाः पर्यवस्यन्ति । सूत्रे अस्येति षष्ठीनिर्देशादन्यसम्बन्धिनः हविषः अन्ययागसम्बन्धिन्या देवतायाश्च अभिधाननिरासार्थः, न तु तत्रापि शक्तिरिति, वाक्यार्थन्यायेन संसर्गस्य भानोपपत्तेः । ये सम्बन्धे शक्तिं वदन्ति, तैरपि हविष्ट्व-देवतात्वयोः निरूपकत्वं संसर्ग इति अङ्गीक्रियत एव ।

अत्र यद्यपि प्रकृतिसमभिव्याहारेण विश्वदेवदेवतात्वादेर्निरूपकत्वावच्छेदकत्वबोधो जायते, तथापि आमिक्षात्वादेर्वैश्वदेवपदमात्रेण न तादृश्याः उपस्थितिः, भावनाया जायमानं 'साधनं किं फलस्य मे' इति करणाकाङ्क्षा हविष्ट्वमात्रेण, सूक्तत्वेन वा उपस्थितेन द्रव्येण न शाम्यति, किन्तु आमिक्षादि-विशेषपदैरेव तच्छाम्यति, अत्र च कल्पे लोहितोष्णोषन्यायेन तद्धितान्तस्य देवताबोधनमात्रे पर्यवसानमिति, अत एव श्रुति-सर्वनाम-तद्धितैरेकस्यैवार्थस्य बोधनमिति मीमांसकानां सिद्धान्तसरणिः । तद्धितः सन्निहितार्थविशेषवाचि-त्वेन देवतायुक्तमामिक्षारूपं द्रव्यविशेषमाचष्टे, नन्वेवं सति तद्धितेनैव आमिक्षाया अभिधाने, अमिक्षापदं व्यर्थमिति न शंकनीयम् । तस्य विशेषसमर्पणात्-अर्थात् आमिक्षापदेन तद्धितोपात्तस्यैव, सर्वनाम्ना इदमा बुद्धिस्थस्य द्रव्यस्य विशेषसमर्पणं क्रियत इति । एवञ्च आमिक्षारूपस्योपपदस्य योऽर्थः, स वृत्तिघटकेन अस्येति सर्वनाम्ना श्रुत्यैवाभिधीयते, तदर्थ एव च तद्धितेनेति इति, त्रयाणाम्-उपपद-तद्धित-सर्वनाम्नामेक एव वाच्योऽर्थः—इति । तथा च वार्तिकम्—

'आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः
आमिक्षापदसान्निध्यात् तस्यैव विषयार्पणम् ।
श्रुत्यैवोपपदस्यार्थः सर्वनाम्नाऽभिधीयते
तदर्थस्तद्धितेनैवं त्रयाणामेकवाच्यता' ॥ इति ।

अत्र च सामानाधिकरण्यं सामान्यविशेषभावमादाय इति मन्तव्यम् । एतेन चेदं शाब्दिकानां मतं निरस्तम् , त्रयाणामेकवाच्यत्वं न सम्भवति, अन्यथा पर्यायतापत्तेः, पर्यायाणां सहप्रयोगो न दृष्ट इति । एवं च पूर्वोक्तरीत्या तद्धितार्थो मीमांसकैरुपवर्णितः सङ्गच्छते । अस्य विस्तरो मीमांसाकौस्तुभे भेदलक्षणे, संख्याधिकरणे, गुणाधिकरणे च द्रष्टव्यः ।

## समासशक्तिवादे सिंहावलोकनन्यायेन दूषणाभिधानम्

शाब्दिकैः समासेषु शक्तिस्स्वीकृता एकार्थीभावलक्षणा। एवं सति निषाद-स्थपत्यधिकरणे तन्मते कथं संघटते। यतो हि तस्मिन्नधिकरणे 'एतया निषाद-स्थपतिं याजयेत्' इति वाक्यमुदाहृत्य निषादस्थपतिपदे निषादानां स्थपतिः निषादस्थपतिरिति षष्ठीतत्पुरुषो वा निषादश्चासौ स्थपतिश्चेति कर्मधारयो वेति सन्दिह्य, पूर्वपक्षे तत्पुरुषः, सिद्धान्ते कर्मधारय इति व्यवस्था कृता, अत्र निषादस्थपतिशब्दे षष्ठीतत्पुरुषः, कर्मधारयो वेति, मीमांसाग्रन्थेषु समासद्वयमेव प्रादर्शि। षष्ठीतत्पुरुषाङ्गीकारेण त्रैवर्णिकानामेवाधिकार इति पूर्वपक्षः, बहु-व्रीह्याश्रयेण सा सिद्ध्यत्त्येव, अतो बहुव्रीहौ पदद्वये अन्यपदार्थे लक्षणेति स नाश्रीयते, षष्ठीतत्पुरुषाश्रयणेनैव तस्यान्यथासिद्धेः। अत्र उभयविधेऽपि समासे शाब्दिकानाम्मते शक्तिस्वीकारात् इदमधिकरणम् तत्पुरुषात् कर्मधारयस्य प्राबल्यं प्रतिपादयत् कथं घटतामिति शंका जायते. मीमांसकमते तु तत्पुरुषे उत्तरपदे लक्षणा, पूर्वपदं तात्पर्यग्राहकमिति तत्पुरुषे लक्षणादोषः, कर्मधारये तु श्रुत्यैव सामानाधिकरण्यं लभ्यते। अतः तत्पुरुषापेक्षया कर्मधारये लाघवात् निषादस्थपतेः निषादेष्ट्यामधिकारः, एतदनुष्ठानौपयिकतया तदर्थज्ञानमाक्षिप्यते, फलमुखगौरवस्यादोषत्वादिति। एवञ्च षष्ठी-तत्पुरुषे लक्षणा निषादश्चासौ स्थापतिश्चेति कर्मधारय एवाऽय-मिति, कूटं दक्षिणेत्यादि लिङ्गमप्युपपद्यत इति, अत इदमधिकरणं शाब्दिकानां मते न घटते—इति।

## अत्र शाब्दिकानां समाधानम्

निषादस्थपतिपदस्य समासशक्तिपक्षे निषादरूपे निषादस्वामिके पुरुषान्तरे चेत्येवं सर्वत्र शक्तत्वान्नानार्थत्वम्। एवञ्च नानार्थपदानां तात्पर्यादिना विशेषनिर्णय इति न्यायेन अर्थकल्पनायां शक्तिग्रहे अन्तरङ्गत्व बहिरङ्गत्वविचारः इति समाधानं न विदुषां मनोऽनुरञ्जयति, न च शक्तिग्रहस्य अन्तरङ्गत्व-बहिरङ्गत्वविचारस्य कथं वा सङ्गतिः ? कर्णे स्पृष्टः कटिं चालयतीति न्यायात्। समासे शक्तिमभ्युपगच्छद्भिश्शाब्दिकैर्निषादस्थपत्यधिकरणविरोधमाशङ्क्य, शक्तिग्रहे तत्पुरुषीयशक्तिग्रहो बहिरङ्गः, तदतिरिक्तार्थविषयकत्वात्। कर्मधार-यीयशक्तिग्रहोऽन्तरङ्गः, तदतिरिक्तार्थाविषयकत्वादिति परिहारोऽभिहितः।

स च—

'पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात्पदानामत्यन्तं प्रविवेको न कश्चन'॥ वा० प० १-७३। इति।

'निरस्तभेदं पदतत्त्वमेतदिति-स्फो. सि. श्लो. ३६'ति च सिद्धान्तमातस्थुषां पदघटकवर्णानामिव समासघटकानां पदानामनर्थकत्वे उपवर्णितः परिहारः कथं घटतामिति विचारयन्तु सुधियः।

एतेन—

'पर्यवस्यच्छाब्दबोधाविदूरप्राक्क्षणस्थिते ।
शक्तिग्रहेऽन्तरङ्गत्व-बहिरङ्गत्व-चिन्तनम्' ॥ इति भूषणसारवचनमिदं प्रत्यूढम् ।

## विध्यर्थविवेचनम्

### विध्यर्थे वैयाकरणमतम्

'शाब्दिकास्तावत् विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनेषु लिङ्, लोट् च, छन्दसि लिङर्थे लेट् इति पाणिनिसूत्रमवलम्ब्य विध्यादयःषडर्थाः द्योत्याः, वाच्या वेति मन्यन्ते । तेषां विवरणं ग्रन्थशरीरे निविष्टमिति, ग्रन्थगौरवभिया न ते प्रदर्श्यन्ते । तत्र विध्यादीनां षण्णामुपादानेऽपि, आद्येषु चतुष्वर्थेष्वन्यदीयप्रवृत्तिजननानुकूलव्यापारत्वरूपस्य प्रवर्तनात्वस्याऽनुस्यूतस्य सत्त्वात्, तेन रूपेण तेषां लिङाऽभिधानात्, तेष्वैकैव शक्तिः, यथोक्तं वाक्यपदीयकृता—

'अस्ति प्रवर्तनारूपमनुस्यूतं चतुर्ष्वपि
तत्रैव लिङ् विधातव्यः किं भेदस्य विवक्षया ।
न्यायव्युत्पादनार्थं वा प्रपञ्चार्थमथापि वा
विध्यादीनामुपादानं चतुर्णामादितः कृतम्' ॥ इति ।

स च प्रवर्तनारूपो व्यापार इष्टसाधनत्वरूप एव, लोके सर्वः प्रेक्षावान्पुरुषः क्रियमाणमिदं मम समीहितं साधयिष्यतीति संप्रधारयति, ततस्तत्र प्रवर्तते इति सार्वजनीनमेतत् । प्रयोजकवाक्यश्रवणसमनन्तरं प्रयोज्यवृद्धस्य प्रवृत्तिं दृष्ट्वा पार्श्वस्थो व्युत्पित्सुर्बालः स्वप्रवृत्तिदृष्टान्तेन प्रथममिष्टसाधनताज्ञानमनुमिमीते, प्रयोज्यवृद्धस्य प्रवृत्तिरस्मिन् कर्मणि इष्टसाधनत्वज्ञानपूर्विका प्रवृत्तित्वात् मदीयप्रवृत्तिवदिति । एवमिष्टसाधनताज्ञानेऽनुमिते, तज्ज्ञानकारणजिज्ञासायां लिङ्घटितवाक्यश्रवणसमनन्तरभावित्वात्, तस्य तद्वाक्यजन्यत्वमवधारयति, 'तदुदितस्स हि यो यदनन्तरः' इति न्यायात् । एवञ्च लिङादिशब्दादेव तस्य प्रतीयमानत्वात्, इष्टसाधनत्वस्य लिङ्वाच्यत्वम्, तस्य प्रवर्तकत्वाच्च प्रवर्तनारूपत्वमिति निश्चिनोति, तस्मादिष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण विध्यर्थः । ईदृशमेव विधितत्त्वं मण्डनमिश्रस्याऽभिमतम्, तथा च विधिविवेकसन्दर्भः,

'पुंसो नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवर्तनामि' ॥ इति।

ब्रह्मसिद्धि-बृहदारण्यकोपनिषद्वार्तिकादिष्वपि ईदृशमेवादृतम्, समर्थितञ्च दरीदृश्यते,, सिद्धान्तकौमुद्यां प्रवर्तनायां लिङित्येवमिति भट्टोजिदीक्षितः, तदनुसारिणश्चाऽन्ये।

## विध्यर्थे तार्किकमतम्

तार्किकाः—बलवदनिष्टाननुबन्धित्वम्, इष्टसाधनत्वम्, कृतिसाध्यत्वञ्च तत्तद्धात्वर्थगतं विध्यर्थमुररीकुर्वन्ति, तेषामयमभिप्रायः। तथाहि—लोके सर्वत्र चेतनस्य प्रवृत्तौ उपयुक्तं त्रयमप्यपेक्ष्यते, इतरथा इष्टसाधनत्वबलवदनिष्टसाधनत्वयोस्सत्त्वेऽपि असति कृतिसाध्यताज्ञाने सुमेरुशृङ्गाहरणादौ प्रवृत्तिर्न दृश्यते, विषमिश्रितमिष्टान्नभोजने क्षुन्निवृत्तिरूपेष्टसाधनताज्ञानकृतिसाध्यताज्ञानयोस्सत्त्वेऽपि मरणसम्पादकत्वेन बलवदनिष्टाजनकत्वज्ञानाभावेन तत्र पुरुषाणां न प्रवृत्तिर्दरीदृश्यते। तथा निष्प्रयोजने जलताडनमण्डलीकरणादौ बलवदनिष्टाजनकत्व-कृतिसाध्यत्वयोस्सम्भवेऽपि समीहितसाधनत्वाभावेन तत्रापि पुंसां प्रवृत्तिर्न विलोक्यते, तस्माद्यत्र प्रवृत्तिर्दृश्यते; तत्रेदं त्रयमपि विदित्वैव पुरुषः प्रवर्तत इत्यभ्युपगमनीयम्।

## प्रवृत्तेर्द्वैविध्यम्

लोके प्रवृत्तिर्द्विधा भवति, स्वेच्छया (स्वतन्त्रा), परप्रेरणया च (परतन्त्रा) चेति, तत्र स्वतन्त्रप्रवृत्तिस्थले प्रागेव प्रमाणान्तरेणेष्टसाधनतां स्वतः एव बुद्ध्वा प्रवर्तत इति सर्वस्वसंवेद्यम्। पराधीनप्रवृत्तौ परकीये लिङ्लोडादिघटितं प्रवर्तकं वाक्यं श्रुत्वा। तत्र प्रवृत्तित्वाविशेषादिष्टसाधनत्वज्ञानपूर्विकयैव भवितव्यम्। तत्र कथमिष्टसाधनत्वज्ञानमिति ज्ञानकारणजिज्ञासायाम् लिङादिघटितवाक्यश्रवणसमनन्तरभावित्वात्, तस्य तद्वाक्यजन्यत्वमेव तदिति निश्चिनोति, तत्राप्यावापोद्वापाभ्यां लिङ्जन्यत्वमवधार्य, तेषां लिङादिवाच्यत्वम् संप्रधारयति पार्श्वस्थो बालः, एवञ्च बलवदनिष्टाजनकत्वादि त्रितयं विध्यर्थः इति सिद्ध्यतीति।

एतावत्तु प्राचाम्, नव्यानाञ्च साधारणम्। तत्र त्रिष्वप्यर्थेषु पृथक्-पृथक् शक्तिः, अथवा त्रितयानुगतैकैव शक्तिरिति विषयेविवादः। पृथक् शक्तिस्वीकारे एकस्य लिङो अनेकशक्तिकल्पनाप्रयुक्तं गौरवं स्यात्। अतस्त्रितयेऽप्येकैव शक्तिरिति प्राचीनास्तार्किका मन्यन्ते, इदञ्च मतं तर्कप्रकाशे, मुक्तावल्याम् गुणखण्डे च विस्तरेण द्रष्टव्यः।

नवीनतार्किकास्तु—बलवदनिष्टाजनकत्वादीनां त्रयाणामेकीकरणे कस्य विशेष्यत्वम्, कस्य विशेषणत्वमित्यत्र न किञ्चिद्विनिगमकमस्ति, अतस्त्रिष्वप्यर्थेषु पृथगेव शक्तिः, पृथक्शक्तिसद्भावेऽपि पुष्पवन्तशब्दस्य यथा सकृच्छ्रुतस्य युगपदेव चन्द्र-सूर्यरूपानेकार्थबोधकत्वम्, तथैव सकृच्छ्रुतस्य लिङादेरर्थत्रयबोधकत्वमुपपद्यते, 'व्युत्पत्तिवैचित्र्यात्पुष्पवन्तशब्दाद्युगपदर्थत्रयस्यापि बोधः' इति भाट्टतन्त्ररहस्यमूलम्। वाचकशब्दनिष्ठायाश्शक्तेर्वाच्यार्थनिरूपितायाश्च यथा वाचकानेककृतं नानात्वं भवति। तथैव वाच्यानेकत्वकृतनानात्वमपि प्रसज्येत। अत एव पुष्पवन्तावित्यादौ दिवाकर-निशाकरयोरेकशक्त्यङ्गीकारेऽपि न दोषः। वस्तुतस्तु तत्रापि दिवाकरत्व-निशाकरत्वरूपशक्यतावच्छेदकभेदाच्छक्तिभेद एव युक्तः। युगपद्बोधात्तु शक्तिद्वयस्यापि युगपद्बोधद्वयजनकत्वम्। अत एव क्त्वाप्रत्ययादौ समानकर्तृकत्व-पूर्वकालत्वयोर्विशेष्य-विशेषणभावे नियामकाभावाच्छक्तिद्वयं परिकल्प्य, युगपद्बोधजनकत्वमङ्गीक्रियत इति। त्रयाणामर्थानामसति बाधके धात्वर्थेऽन्वय इत्युत्सर्गः, बाधकसत्त्वे त्वन्यत्रान्वयः। यथा 'श्येनेनाभिचरन् यजेत' इत्यत्र बलवदनिष्टाननुबन्धित्वं बाधितम्। वैरिमरणरूपतात्कालिकेष्टसाधनत्वेऽपि कालान्तरे नरकप्राप्तिरूपानिष्टसाधनत्वस्य शास्त्रेण बोधितत्वात्। आद्यस्य विस्तरः शक्तिवादे सामान्यकाण्डे, द्वितीयस्य व्युत्पत्तिवादे, विध्यर्थविचारे च द्रष्टव्यः।

## विध्यर्थविषये पार्थसारथिमिश्रमतम्

पार्थसारथिमिश्रस्तु न्यायरत्नमालायास्तृतीयप्रकरणे विधिनिर्णयनामके विध्यर्थं चतुर्धा प्रत्यपीपदत्। तथाहि—१—नियोगो विध्यर्थः प्राभाकरीयः, २—इष्टसाधनत्वं तत्त्वेन रूपेण विध्यर्थः। ३—तत्तद्धात्वर्थरूपक्रियागतं कार्यत्वम्। अभिधाख्यश्शब्दव्यापार इति मतत्रयमुपपाद्य, आद्यमतं महताऽभिनिवेशेन खण्डयांबभूव, द्वितीय-तृतीययोः पक्षयोर्वार्तिकाननुगुणतामुपवर्णयामास, अन्ते च 'न्यायविदान्तु इष्टसाधनत्वमेवाभिमतम्, इदमेव हि भगवतो मण्डनमिश्रस्यापि—

'पुंसो नेष्टाभ्युपायत्वात् क्रियास्वन्यः प्रवर्तकः।
प्रवृत्तिहेतुं धर्मञ्च प्रवदन्ति प्रवतनाम्'॥ इति,

एवम्—कार्यं न प्रवर्तनेति, "प्रवर्तनावचनः कर्तव्यतावचनः प्रत्ययः" ( विधि० वि० पृ० २४३ ) इति वदतोऽभिमतमिति ग्रन्थसन्दर्भेण समीहितसाधनत्वं लिङर्थ इति स्वाशयमाविरकार्षीत्, धर्मपुराभिजनः तन्त्ररहस्यकारो रामानुजाचार्योऽपि न्यायविदान्त्वित्यादिग्रन्थमवतारयन्

समीहितसाधनताविध्यर्थत्वपक्षमेव पार्थसारथिमिश्राभिमतमिति मन्यते। शास्त्र-दीपिकाव्याख्याता सर्वतोमुखसोमयाजी सोमनाथदीक्षितोऽपि पार्थसारथिमते इष्टसाधनत्वमेव प्रवर्तनेति सुस्पष्टमेव व्याहरति ( शा० दी० व्या० पृ० ७ )।

परन्त्वाचार्यखण्डदेवः—'कस्य पुनरसौ प्रवर्तनारूपो व्यापारः। शब्दस्येति ब्रूमः, तस्य सन्निहितत्वादन्यस्य चाप्रतीतेः, इति स्वर्गकामाधिकरणशास्त्रदीपिका-मवलम्ब्य शब्दकर्तृकस्यार्थप्रतिपादनरूपस्य प्रवर्तनारूपत्वमिति अभिधा-भावनापक्षमेव तदभिप्रेतमिति अर्थवादाधिकरणकौस्तुभे पृ० २१, भाट्टतन्त्ररहस्ये च पृ० १६ विध्यर्थनिरूपणप्रस्तावे उपन्यस्यति, निरस्यति च।

## तत्र न्यायसुधाकारस्य मतम्

तन्त्रवार्तिकव्याख्याता महादेवसूनुस्त्रिकाण्डमण्डनस्सोमेश्वरभट्टः अर्थ-वादाधिकरणस्य 'विधिनात्वेकवाक्यत्वादि'त्यादिसिद्धान्तसूत्रवार्तिकव्याख्यायाम् राणके षट्पक्षानुपक्षिपति—१-प्रवर्तको लिङादिः, २—तत्क्रिया वा विलक्षणा, ३-अभिधा वा ४-आज्ञादिर्वा, ५-कार्यं वा, ६-अथेष्टहेतुता, इति उपन्यस्तान् सर्वानेव पक्षानदूदुषत्। तदनन्तरम् 'का पुनः प्रवर्तनेति पृष्ठा प्रवृत्तिहेतुभूतः प्रवर्तयितृधर्मः कश्चिदिति ब्रूमः' इति समाधत्ते स्म। ततः प्रवर्तयितृधर्मो मानस-प्रत्यक्षप्रवेद्यः प्रैषादिरूपो नाऽपह्नवमर्हति। अपौरुषेये वेदे पुरुषाभावेन पुरुषस्थानीयस्य लिङादिशब्दस्यैव प्रवर्तकत्वात्, तद्धर्मो भविष्यतीति आच-क्षाणः प्रागुक्तात् पक्षषट्काद्व्यतिरिक्तं सप्तमं प्रवर्तनाविध्यर्थत्वपक्षमन्वमंस्त, अयमेव पक्ष आचार्यखण्डदेवेन समादृतः, समर्थितश्च। यथा—अतः क्लृप्तैर्विनि-गमनाविरहे कल्प्यमन्यत्प्रसिद्ध्यतीतिन्यायेनाऽलौकिको धर्म एव लिङादिनिष्ठः प्रवर्तनात्वेन लिङादिवाच्यश्च कल्प्यते।

तज्ज्ञानञ्च प्रवृत्तिं प्रति कारणमिति, न्यायसुधाकृन्मतमेव कथञ्चिद्युक्तमिति 'कौस्तुभे व्यक्तम्—इति।

## तत्र दीक्षितेन्द्रमतम्

प्रवर्तकवाक्येषु यजेतेत्यादिषु कर्तव्यमिष्टसाधनव्यापारमवगमयन्, तस्येष्टसाधनताम्, कर्तव्यताञ्चाऽवगमयति, अनन्यलभ्यत्वात्तयोः, अनन्य-लभ्यस्य च शब्दार्थत्वादिति भामतीवाक्यव्याख्यानसन्दर्भे कल्पतरुं व्याचक्षाणैः परिमलकृद्भिर्दीक्षितेन्द्रैः पक्षाः षट् विध्यर्थतयोपन्यस्ताः।

ते च—

( क ) विधि-निषेधात्मकशब्द एव पुरुषस्य प्रवृत्तिम्, निवृत्तिञ्च

भावयन् शब्दभावनेत्युच्यत इति, लिङादियुक्तेषु वाक्येषु द्वे भावने अवगम्येते शब्दात्मिका चाऽर्थात्मिका चेति यथाश्रुतवार्तिकग्रन्थानुसारी कश्चित्पक्षः। स च मीमांसकैरेव—

'तत्र शब्दस्स्वरूपेण वायुवच्चेत्प्रवर्तकः।
प्रमाणत्वं विहन्येत नियमाच्च प्रवर्तयेत्' ॥ इत्यादिन्यायैर्निराकृतः।

( ख ) लिङादिभिः, नञ्समभिव्याहृतलिङादिभिश्च बोधितः प्रवर्तना-निवर्तनात्मकशब्दस्य व्यापारः शब्दभावना-इति।

( ग ) लोके प्रेषणाध्येषणादिः प्रवर्तकस्य पुरुषस्य व्यापारो गामानयेत्यादिषु प्रवृत्ति-निवृत्तिहेतुत्वेनावगतः। अपौरुषेये वेदे वक्तृपुरुषव्यापारासंभवात् शब्दस्यैव स व्यापार इत्यन्यः पक्षः।

( घ ) वेदस्येश्वरकर्तृकत्वात्तदभिप्राय एवाज्ञादिरूपः प्रवर्तकः, निवर्तकश्च लिङादीनाम्, नञ्युक्तलिङादीनाञ्चार्थ इत्युदयनादितार्किकपक्षः।

( ङ ) त्रैकाल्यानवच्छिन्नरूपेण लिङादि-नञ्युक्तलिङाद्यसाधारण-भूतार्थभावनैव प्रवर्तिका, निवर्तिका चेति शब्दभावनामनङ्गीकुर्वतां मीमांसकैक-देशिनां पक्षः।

विधि-निषेधलिङादिबोध्यापूर्वरूपो नियोगः प्रवर्तकः, निवर्तकश्चेति प्राभाकरपक्षः ( वे० क० परि० पृ० १४७ ) इति।

## विध्यर्थविषये आचार्यखण्डदेवमतम्

आचार्यखण्डदेवेन लिङर्थनिरूपणावसरे प्रवृत्त्यनुकूलव्यापारः प्रवर्त्तनेति प्रथमः पक्ष उक्तः। अयमत्र प्रवर्ततामित्याकारकत्वरूपविषयिताविशेषः पुरुषा-भिप्रायालौकिकोभयसाधारण इति द्वितीयः प्रकारः। इच्छात्वं जातिविशेषः इति तृतीयः प्रकारः। अस्य पक्षस्योपपादनाय वैदिकलिङादिषु वयमिच्छामपि स्वीकुर्मः। यदीच्छाऽऽत्ममात्रनिष्ठा नाचेतननिष्ठा, इति विभाव्यते, तदौपनिषद-मीश्वरमप्यङ्गीकृत्य तदीयेच्छैव लिङर्थ इति स्वीकुर्मः। वस्तुतस्तु लोके लिङादेरि-च्छायां शक्तिः, वैदिकस्येच्छायामलौकिकप्रेरणायां लक्षणेति युक्तमुत्पश्याम-इति।

### अयमत्र विध्यर्थप्रकर्षसंक्षेपः

१—इष्टसाधनत्वं विध्यर्थ इति शाब्दिकाः।

२—इष्टसाधनत्वम्, बलवदनिष्टाननुबन्धित्वम्, कृतिसाध्यत्वञ्चेति त्रितयं विध्यर्थ इति नव्यतार्किकाः।

३—कर्तुस्समीहितसाधनत्वं विध्यर्थ इति मण्डनाचार्याः।

४—प्रवर्तनात्वेन रूपेणेष्टसाधनत्वं विध्यर्थ इति विधिनिर्णये पार्थसा-

रथिमिश्रः, स्वर्गकामाधिकरणरीत्या शब्दकर्तृकोऽर्थप्रतिपादनरूपाऽभिधाऽर्थभावनाभिधानानुकूला शक्तिरिति खण्डदेवाचार्योक्तः अभिधाभावनापक्षश्च कौस्तुभादौ।

५—प्रवृत्तिहेतुभूतः प्रवर्तयितुर्धर्मोऽलौकिको विध्यर्थ इत्यर्थवादाधिकरणसिद्धान्तवार्तिकव्याख्यायां न्यायसुधाकारः।

६—[1]अलौकिको धर्म एव लिङादिनिष्ठः प्रवर्तनात्वे लिङादिवाच्य इति रहस्यकृत्।

तत्र पक्षत्रयम्—१-प्रवर्तनात्वम्-प्रेरणात्वं वाऽखण्डो धर्मः, २-विषयिताविशेषः, ३—इच्छात्वम्-वेति।

आचार्यखण्डदेवो स्वाभिमतं विध्यर्थं निरूपयिषुर्जल्पन्यायेन पराभ्युपगतान् विध्यर्थान्निरस्य स्वाभिप्रेतं विध्यर्थं प्रत्यपीपदत्। रहस्यमतेन विध्यर्थमधिजिगांसूनां स्पष्टप्रतिपत्तये उपाक्षेपि।

## भावनामुख्यविशेष्यकशाब्दबोधस्य संक्षेपेण प्रतिपादनम्

शाब्दबोधे आख्यातवाच्या आर्थीभावनैव मुख्यविशेष्यतया भासते, न तु प्रथमान्तपदोपस्थाप्यः, न वा धात्वर्थ इति प्राक् अवादिष्म, अत्र शाब्दबोधे भावनाया मुख्यविशेष्यतया भासते इत्ययमर्थः संक्षेपेण प्रदर्श्यते। तथाहि—

सर्वं वाक्यं क्रियायां परिसमाप्यत इति रीत्या क्रियापदं विना देवदत्तः तण्डुलमित्यादीनि पदानि शाब्दबोधं नोत्पादयन्ति इति सार्वजनीनमेतत्। तथा च वार्तिकम्—

> 'न हि प्रयोजनापेतं वाक्यमुच्चार्यते क्वचित्।
> प्रयोजनक्षमं नापि पदमाख्यातवर्जितम्'॥

श्लो० वा० ३४६ इति।

अतः क्रियापदमपेक्षते। तत्र क्रियापदमेव चैत्र-तण्डुलादिपदार्थस्य विशेष्यसमर्पकम्, द्वितीयाद्यर्थश्च कर्मत्वादिः प्रातिपदिकार्थस्य तण्डुलादेः विशेष्यम् भवति 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः, तयोश्च प्रत्ययःप्राधान्येन' इति स्मृतेः। तिङन्तघटकधातोराख्यातार्थ एव विशेष्यम्, प्रत्ययार्थप्राधान्यस्मृतेरिति सर्वसम्प्रतिपन्नम्, यद्यपि दशलकारवाचिनः आख्यातस्य कृतिः, कर्ता, संख्या कालश्चेति

---

[1]—अतः क्लृप्तैर्विनिगमनाविरहे कल्प्यमन्यत्प्रसिद्ध्यतीति न्यायेनाऽलौकिकः लिङादिनिष्ठः प्रवर्तनात्वेन लिङादिवाच्यश्च कल्प्यते, तज्ज्ञानञ्च प्रवृत्तिं प्रति कारणमिति न्यायसुधाकृन्मतमेव कथञ्चिद्युक्तमिति व्यक्तं कौस्तुभे इति।

अर्थाः सन्ति। तेष्वपि भावनैव मुख्यविशेष्यम्, अन्येषाञ्च सर्वेषां तत्रैव प्रकारतया भानम्, 'भावप्रधानमाख्यातमि'ति यास्कस्मृतेः।

### स्मृतेः कुत्र स्वारस्यमिति परीक्षा

अस्याः स्मृतेः प्रत्ययार्थभावनायां धात्वर्थं प्रति विशेष्यत्वं प्रतिपादयितुं प्रवृत्तिरिति वक्तुं न शक्यते, 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः' इति स्मरणेनैव धात्वर्थविशेष्यत्वं भावनायाः सिद्धम्। नवा धात्वर्थापरपर्यायस्य भावस्य प्राधान्यप्रतिपादनाय इयं स्मृतिः प्रवृत्ता इति वक्तुं शक्यते, प्रत्ययार्थप्राधान्यस्मृतेः विरुद्धार्थकल्पनाया अयुक्तत्वात्। यतो हि भावपदं नदीवृद्धयादिवत् पर्यभाषि शाब्दिकैः, अन्यथा व्याकरणे यत्र यत्र भावशब्दः प्रयुज्यते, तत्र सर्वत्रापि भावशब्देन धात्वर्थस्यैव ग्रहणमिति नियन्तुं न शक्यते। तस्य 'भावे त्वतलौ' इत्यादौ भावशब्देन प्रकृतिजन्यबोधे प्रकारीभूतः धर्मो भाव इत्युच्यते इति वैयाकरणैरेवोर्थस्याभिधानात्। अपि तु नपुंसके भावे क्त इत्यादावेव इति, शाब्दिका एव मन्वते। तस्मात् भावपदं निरुक्तस्मृतिगतं धात्वर्थपरं भवितुं नार्हति, अपि तु णिजान्तात् भूधातोः अच्प्रत्यये कृते भावयतीति व्युत्पत्त्या भवनानुकूलव्यापाररूपा कृत्यपरपर्याया भावशब्देनाभिलप्यते, तथा चाख्यातवाच्येषु भावनादिष्वनेकेष्वर्थेषु कस्य प्राधान्यम्, कस्य वोपसर्जनत्वमिति संदेहे भावप्रधानमाख्यातमिति यास्कवचनं भावनाया प्राधान्यमभिधत्ते, तस्मात् धात्वर्थादीनां मुख्यविशेष्यभूता भावनैव शाब्दबोधे भासते—इति।

### प्रथमान्तस्थले क्रियापदाध्याहारानध्याहार इति शङ्का—तन्निरासश्च

'तण्डुलं पचति' इत्यत्र क्रियाध्याहारस्यावश्यकत्वेऽपि 'नीलो घटः, पण्डितश्चैत्रः' इत्यादिप्रथमान्तपदस्थले क्रियापदाकाङ्क्षायां प्रमाणाभावात्प्रथमान्तार्थस्य भावनाविशेषणत्वं न सम्भवतीति न शङ्कनीयम्। घटः, चैत्रः इत्येतावन्मात्रोक्तौ निराकांक्षः शाब्दबोधो नोत्पद्यते। किङ्करोतीत्याकाङ्क्षाया अवश्यमुत्पद्यमानत्वात्। यद्युच्येत चैत्र इत्येतावन्मात्रस्य निराकाङ्क्षबोधजनकत्वाभावेऽपि, चैत्रः पण्डित इति वाक्यात्पण्डिताभिन्नश्चैत्र इति निराकाङ्क्षश्शाब्दबोधो जायते। अतः प्रथमान्तार्थस्य नियमेन क्रियासाकाङ्क्षत्वे प्रमाणं नास्तीति वक्तुं शक्यते।

### महावार्तिकवचनस्याशयवर्णनम्

अस्तिर्भवन्तीपरः प्रथमपुरुषऽप्रयुज्यमानोप्यस्तीति कात्यायनवचनात्प्रथमान्तार्थो नित्यं क्रियापदसाकाक्ष इति। यदि तत्र योग्यतानुसारेण योग्यतत्तत्क्रियाध्याहार आवश्यक इति वृद्धव्यवहारः। अतो वचनमिदं व्यर्थमिति वक्तुम्

न शक्यते। वेदे अस्याध्याहारनियम एवास्य प्रयोजनमिति, सर्वत्र वाक्ये क्रियापदमस्त्येव। प्रथमान्तपदमपि क्रियापदसाकांक्षमेव। अत इदं कात्यायन-स्मरणं प्रथमान्तार्थमुख्यविशेष्यकत्वभ्रमनिरासमुखेन प्रथमान्तार्थः शाब्दबोधे विशेष्यं न भवतीति सूचयति।

## उक्तयोः कार्यकारणभावयोरेव प्रथमान्तार्थस्य क्रियापद-साकांक्षत्वे मानमिति कथनम्

किञ्च प्रातिपदिकार्थप्रकारकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन सुब्जन्योपस्थितिः कारणमित्येकः कार्यकारणभावोऽङ्गीक्रियते। लिङ्ग-संख्या-व्यतिरिक्तसुबर्थप्रकारकशाब्दबोधं प्रति क्रियापदजन्योपस्थितिः कारणमित्यपरः कार्यकारणभावः। इत्थं क्लृप्तयोरुभयोः कार्यकारणभावयोरेव प्रथमान्तार्थस्य क्रियापदसाकांक्षत्वे मानत्वात्। एवञ्च प्रथमाप्रकृत्यर्थः प्रथमार्थे प्रकारतया भासते, प्रथमार्थश्च क्रियायां विशेषणतया भासते। 'प्रातिपदिकार्थलिङ्गपरिमाण-वचनमात्रे प्रथमा' इति पाणिनिसूत्रेण प्रथमाविभक्तेः संख्यातिरिक्तार्थसद्भावः अवगम्यते।

## प्रथमायास्साधुत्वशंका-निरासौ

ननु प्रातिपदिकेनैव तस्य लाभात्प्रथमायाः साधुत्वार्थं प्रयोग इति वक्तुं शक्यम्। चैत्र इत्यत्र प्रथमार्थः चैत्रः, प्रातिपदिकं चैत्रपदं तु चैत्ररूपार्थ-विशेषतात्पर्यग्राहकम्। अतः प्रथमार्थ एवाख्यातवाच्यभावनायां प्रकारतयाऽव-भासत इति पाणिनिमतम्।

## कात्यायनमतम्

वार्तिककारस्तु 'अभिहिते प्रथमा' इति वदन् अभिहितकारकवाचिनी प्रथमेति मनुते। तन्मते चैत्रः पचतीत्यादौ कर्तृत्वं प्रथमार्थः, तत् प्रकृत्यर्थे चैत्रे आधेयतासम्बन्धेनान्वितं सदाख्यातवाच्यभावनायामन्वेति। प्रथमया चैत्र-वृत्तित्वेन कर्तृत्वं बोध्यते। आख्यातेन तु कर्तृत्वेन बोध इति, चैत्रवृत्तित्वेन कर्तृत्वस्य बोधनाय प्रथमाया कर्तृत्वाभिधानं युज्यत एव। आख्यातेन कर्तृत्वा-भिधानमेवाख्यातपदोत्तरं प्रथमाप्रयोजकम्। अत एव भाट्टदीपिकायां कर्त्रधि-करणे यद्वृत्तिकारकं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते, तत्त्वम् प्रथमाप्रयोजकमभिहितत्वमित्यवोचि रहस्यकृता। टिप्पण्यामस्माभिस्तत्रत्यः सर्वो विषयः सङ्गृहीतः, तत्रैव द्रष्टव्यमिति। एवञ्च प्रथमायाः साधुत्वाय आख्यातेन कर्तृत्वाभिधानमावश्यकम्, तच्च कर्तृत्वमखण्डो धर्म इति। एतेन

कृत्यभिधानं प्रथमाप्रयोजकमिति निरस्तम्। ईदृशं च कर्तृत्वं भावनायामेवान्वेति, कार्य-कारणभावलाघवात्। तथा च सुबन्तपदानां स्वार्थविशेष्यसमर्पकं क्रियापद-मेवेत्येतावता सङ्गृहीतः।

### धात्वर्थस्याप्याख्यातार्थविशेष्यकत्वमिति निरूपणम्

पचतीत्यादौ धात्वर्थस्य पाकस्याऽऽख्यातार्थ एव विशेष्यम्, प्रत्ययार्थ-प्राधान्यस्मृतेः। आख्यातवाच्येषु भावनैव विशेष्यमिति न प्रस्मर्तव्यम्, 'भाव-प्रधानमिति यास्कस्मरणात्। एवञ्च तिङ्सुबन्तचयात्मके वाक्ये शाब्दबोधे भावनैव विशेष्यतया भासत इति।

यत्रोदनं पचतीत्यादौ प्रथमान्तपदं न श्रूयते, तत्रापि सामग्रीवशाद्भावना-विशेष्यक एव बोधो जायते, बाधकाभावात्। भावनाप्रकारकशाब्दबोधस्य प्रथमान्तपदाभावेऽनुपपत्तेश्च, अत आख्यातवाच्यभावनायाः क्वचिन्मुख्य-विशेष्यतया भानसिद्धेः, सर्वत्र मुख्यविशेष्यतयैव प्रतीतिर्युक्ता।

### अस्मिन्नर्थे सूत्रकारस्य सम्मतिप्रदर्शनम्

भगवान्सूत्रकारः–'तद्भूतानां क्रियार्थेन समाम्नायोऽर्थस्य तन्निमित्तत्वा-दि'ति सूत्रयन् क्रियामुख्यविशेष्यकमेव शाब्दबोधं स्वानुभवसिद्धं कण्ठरवेण वदति। आख्यातोपात्तसंख्यायाः प्रथमान्तपदोपस्थाप्ये चैत्रादावन्वयवत्, चैत्र इव मैत्रो गच्छतीत्यत्र इवशब्दार्थे सादृश्ये प्रतियोगितासंबन्धेन विशेषणभूते-चैत्रादावन्वयो न घटत इत्येतद्वारणाय प्रथमान्तपदोपस्थाप्येऽन्याविशेषणीभूतत्वम् विशेषणं दीयत इत्येवमुक्तावपि न निस्तारः। आख्यातार्थकृतावाधेयतासम्बन्धेन वर्तमानादिकालस्येव चैत्रादेरपि तेनैव सम्बन्धेन तत्रान्वयस्य वक्तुं शक्यतया आख्यातार्थकृतेर्विशेषणतया भानमित्यत्र न किञ्चिद्विनिगमकमस्ति। अतः पूर्वोक्त-कार्यकारणभावोऽयुक्त एव। तत्र न्यायदर्शने, वैशषिकदर्शने वा प्रथमान्तार्थ-मुख्यविशेष्यक एव शाब्दबोध इत्यत्र न किञ्चिद्विनिगमकमस्ति, जैमिन्याद्यनु-भवविरुद्धानुभवस्य शपथनिर्णेयत्वात्।

### तिङुपात्तसंख्याया भावनायामेवान्वयः, न प्रथमान्तार्थे

अपि च देवदत्तः पचतीत्यादौ तिङुपात्तसंख्या प्रथमान्तार्थे चैत्रादौ नान्व-यमर्हति, विलम्बेनोपस्थितत्वात्। चैत्र इत्यत्रैकवचनादेकत्वस्य शीघ्रमुपस्थित्या तस्य चैत्रेऽन्वयेनाकांक्षाशान्तेः, तिङुपात्तसंख्याया अन्वये आकांक्षाभावाच्च। चैत्रो मैत्रश्च गच्छत इत्यत्र सुपा द्वित्वस्यानुपस्थित्याऽऽख्यातवाच्यद्वित्वस्य प्रथमान्तार्थेऽन्वयो वक्तव्यः। अत्राख्यातेन द्वित्वं बोध्यते, एकवचनेनैकत्वम्। अत्रान्यतरस्याशाब्दत्वमेषितव्यम्, तत्रान्यतरस्मिन् हातव्ये किमेकत्वान्वयबोधः

शाब्दः, अथवा द्वित्वान्वयानुभवः शाब्दः, द्वित्वान्वयानुभवस्याशाब्दत्व-कल्पनं ज्यायः, रहस्यकृदुक्तरीत्या भावनावाचकस्याख्यातस्य कर्तरि निरूढलक्षणमङ्गीकृत्य तत्रैव कर्तर्येकत्वान्वय इति स्वीकारो ज्यायान्। एवं च तिङ्पात्तसंख्यायाः प्रथमान्तार्थे नान्वयः-इति।

## तार्किकमते तार्किकाभिमतस्य स्थलविशेषेऽसङ्गत्याऽयुक्तत्वम्

प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधमङ्गीकर्तृभिराख्यातविशेष्यभूतायाः भावनाया एकत्वमुपपद्यते। यथा घटवद्द्रव्यमित्यादिवाक्यान्मत्वर्थद्रव्य-विशेष्यको घटप्रकारकशाब्दबोधो जायते। तत्र सम्बन्धः सम्बन्धत्वेन भासते, न तु विशिष्य।

एतेन पूर्वं सम्बन्धसामान्येन बोधः, तदनन्तरं विशिष्य बोध इति गौरवम्। तत्तत्संसर्गकबोधे तत्तत्समभिव्याहारज्ञानस्य कारणतानां कल्पनेन कार्यकारणभावानन्त्यं दुर्वारमिति निरस्तम्।

## कर्त्राख्याते कर्तरि, कर्माख्याते कर्मणि लक्षणेति कथनम्

एवम्—कर्त्राख्यातस्य कर्तरि, कर्माख्यातस्य कर्मणि निरूढलक्षणा। अतः पचतीत्येतावन्मात्रश्रवणेऽपि पाककर्ता एको नवेति विचिकित्सा नोत्पद्यते। भवति पाककर्ता क इति जिज्ञासा। अतः पचतीत्यस्मात्पाककर्तृप्रतीतिम् विनैतदुभयमुपपादयितुं न शक्यते, तस्मात्कर्तुः प्रतीतये लक्षणाऽऽवश्यकी। एवं सति लकारविधायकमनुशासनमपि संगच्छते। कर्तृत्वं चाखण्डोपाधिरूपो धर्मः, न तु कृत्याश्रयत्वमिति सिद्धान्तः संगच्छते। इतरथा कृत्याश्रयत्वरूपस्य कर्तृत्वस्य भिन्नत्वाद्व्यासज्यवृत्तित्वसिद्धान्तो न संगच्छते। आख्यातेन निरूढलक्षणया बोध्यः कर्ता स्वनिष्ठकर्तृतानिरूपकतासम्बन्धेन भावनायामन्वेति। पचतीत्यस्य पाकं करोति पाकेन करोतीति द्वेधा विवरणदर्शनात्कर्मत्व-करणत्वान्यतरसम्बन्धेन धात्वर्थस्य भावनायामन्वयः।

## सांप्रदायिकमतम्

साम्प्रदायिकास्तु धातुना स्वार्थवृत्तिकर्मत्व-करणत्वान्यतरलक्षणया प्रतिपाद्यते। तस्यैव स्वनिरूपकत्व-स्वनिरूपकोद्देश्यकत्वान्यतरसम्बन्धेन भावनायामन्वय इति वदन्ति। स्वनिष्ठकरणतानिरूपकोद्देश्यकत्वसम्बन्धेन पाकस्य भावनायां करणत्वेनान्वयः। तथा च धात्वर्थः यथाक्रमं कर्मत्व-करणत्वान्यतरसम्बन्धेन भावनायामन्वेति। एवमोदनं पचतीत्यत्र द्वितीयार्थः कर्मत्वम्। तच्च परसमवेतक्रियाजन्यफलशालित्वसमनियतमखण्डोपाधिरूपम्। द्वितीयार्थसंख्यापि स्वाश्रयसमवेतत्वसम्बन्धेन तत्रैवान्वेति। कर्मत्वे च प्रकृत्यर्थ ओदन आधेयतासम्बन्धेनान्वेति, तच्च स्वनिरूपकपाकानु-

कूलत्वसम्बन्धेन भावनायामन्वेति, पचतीत्यस्य पाकं करोति, पाकेन करोतीति विवरणदर्शनाद्धात्वर्थो भावनायां कारकं वाजपेयाधिकरणन्यायेन। तत्र ह्यधिकरणे धात्वर्थस्य क्रियात्वं निरस्य, कारकत्वं व्यवस्थापितम्, तन्न विस्मर्तव्यम्। एवञ्च धात्वर्थसाधारण्येन कारकप्रकारकशाब्दबोधं प्रति भावनाविशेष्यतासम्बन्धेनाख्यातपदजन्योपस्थितिः कारणमित्येक एव कार्यकारणभावः कल्पनीय इति लाघवम्।

## उपस्थितस्य परित्यागे मानाभावेन, तस्यैव विशेष्यत्वकल्पनं युक्तमिति कथनम्

एवं यत् धात्वर्थस्यान्वयार्थमुपस्थितं भावनाविशेष्यत्वम्, तस्यैव कर्मत्वादिप्रकारतानिरूपितत्वमपि कल्पयितुं युक्तम्, न त्वनुपस्थितस्य धात्वर्थविशेष्यस्य। पदजन्यशाब्दबोधं प्रत्यन्याविशेषणीभूतप्रथमान्तपदजन्यार्थविशेषोपस्थितिः कारणमिति कार्यकारणभावो वक्तव्यः। स च न सम्भवति। 'चैत्रो न पचति' इत्यत्र नञर्थाभावो भावनाया विशेष्यम्। संख्याया विशेष्यं प्रथमान्तार्थश्च। अतोऽत्र प्रथमान्तार्थस्य भावनाविशेष्यत्वं वक्तुं न शक्यते। एवं संख्यायाः प्रथमान्तार्थेऽन्वयो न स्यात्। यदि तदर्थं निपातासमभिव्याहृतत्वं तत्र विशेषणं दीयते, तर्ह्यनेककार्यकारणकल्पनागौरवम्। 'चैत्र एव पचति' इत्यत्र निपातसमभिव्याहारस्थले आख्यातार्थसंख्याभावनयाः प्रथमान्तार्थेऽन्वयाभ्युपगमात्, उक्तकार्यकारणभावस्य सर्वत्रासम्भवात्। यदि तत्तस्थलानुरोधेन तादृशतादृशकार्यकारणभावः कल्प्यते, तदा अनेककार्यकारणभावकल्पनागौरवम् न्यायमते कथमपि परिहर्तुं न शक्यते।

## चैत्र एव पचतीत्यत्र शाब्दबोधे स्वमते कार्यकारणभावलाघवप्रदर्शनम्

मीमांसकमते तु प्रातिपदिकार्थभिन्नः सुबर्थलिङ्ग-संख्याव्यतिरिक्तः सर्वोऽपि भावनायामेवान्वेतीति महल्लाघवम्। 'चैत्र एव पचती'ति वाक्याच्चैत्रः पाकानुकूलकृतिमान्, चैत्रान्यः पाकानुकूलकृत्यभाववानिति बोधः समुत्पद्यते। अत्र च चैत्रो विशेष्यत्वेन, विशेषणत्वेन च भासते। एवञ्च चैत्रस्य, तदन्यस्य च भेदेन वाक्यार्थभेदाद्वाक्यं भिद्येत। चेत्रे पचति, देवदत्ते चापचति' कीदृशौ चैत्र-देवदत्ताविति प्रश्ने-चैत्र एव पचतीत्युत्तरं स्यात्। 'ओदनं पचति' इत्यत्र प्रथमान्तपदाभावेन कथं प्रथमान्तार्थमुख्यविशेष्यको बोधः। भावनाप्रकारकशाब्दबुद्धिं प्रत्याख्यातपदज्ञानस्य हेतुत्वात्तादृशबोधनिर्वाहाय प्रथमान्तपदस्याध्याहार इति वक्तुं न शक्यते।

किञ्च पूर्वोक्तकार्यकारणभावस्य 'चैत्रेण सुप्यते, गगनेन स्थीयते' इति भावाख्यातस्थले व्यभिचारः, अन्यथा प्रथमान्तपदस्याध्याहारः–इति। यदि भावाख्यातस्थले आख्यातार्थविशेष्यकबोध एवेत्युच्यते, तर्हि पूर्वोदाहृतकार्यकारणभावशरीरे भावाख्यातभिन्नत्वं निवेशनीयम्। तदा कार्यकारणभावान्तरकल्पनाप्रयुक्तगौरवं न परिहर्तुं शक्यते।

किञ्च न्यायमते प्रथमान्तार्थमुख्यविशेष्यकबोधाभ्युपगमे 'कीदृशश्चैत्रः' इति प्रश्नस्य 'चैत्रः पचती'ति वाक्यमुत्तरं स्यात्, पाकानुकूलकृतिमान् चैत्र इति बोधस्योदयात्। न च मीमांसकमते कीदृशी कृतिरिति प्रश्नस्य 'चैत्रः पचती'त्युत्तरं स्यात्, चैत्रकर्तृकपाककृतेर्बोधात्। यतो हि स्त्रीलिङ्गविशिष्टकृतिविषयकप्रश्नस्य स्त्रीलिङ्गविशिष्टकृतिबोधकशब्दघटितं वायमुत्तरं भवितुमर्हति। आख्यातवाच्या कृतिस्तु लिङ्गानन्वयिनीति, न तादृशं वाक्यमुत्तरम्। अतः प्रतिबन्द्या निस्तारो न भवितुर्हति।

तथा चाख्यातार्थभावनारूपकृतिमानिति बोधो नोपपद्यते। एतावता ग्रन्थेन प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधो न सम्भवतीत्युक्तम्।

## चैत्रो न पचतीत्यादौ शाब्दबोधः

प्रतिज्ञातो भावनामुख्यविशेष्यकबोध एव युक्त इति प्रागुपपादि। आख्यातवाच्या संख्या सामानाधिकरण्यसम्बन्धेन भावनायामेवान्वेति। एवं कालोऽप्याधेयतासम्बन्धेन भावनायामन्वेति। जानातीत्यादावाश्रयत्वे, नश्यतीत्यादौ प्रतियोगित्वे वर्तमानः कालः स्ववृत्त्युत्पत्तिकनाशनिरूपितत्वसम्बन्धेनान्वेति।

## अखण्डोपाधिरेवास्यस्त्व सर्वम्

खण्डदेवाचार्यैस्सर्वत्राखण्डोपाधिरूपं कर्तृत्व-कर्मत्वादिकमितिस्वीकरोति, लाघवात्। तत्स्वरूपञ्चेदम्-समवायभिन्नत्वे सति, स्वरूपसंबन्धेन वृत्तित्वे सति भावत्वम् इति। तत्र समवायेऽतिव्याप्तिवारणाय प्रथमम्, समवायेन वृत्तावतिव्याप्तिवारणाय द्वितीयं सत्यन्तम्, स्वरूपसंबन्धेन वृत्तिमति भावभिन्नेऽतिव्याप्तिवारणाय विशेष्यदलमिति बोध्यम्।

एवञ्च तत्तद्विभक्तिबोध्यं कर्तृत्व-करणत्व-सम्प्रदानत्वादिकमप्यखण्डमेव भावनायामन्वेति। एवं भावाख्यातस्थलेऽपि भावना बोध्यते, चैत्रेण स्वापः क्रियत इति विवरणात्, 'भावे चाकर्मकेभ्यः' इति पाणिनिस्मरणाच्च। अतः सोऽपि भावनायामन्वेति।

एवं 'चैत्रो न पचति, चैत्र एव पचति, नीलो घटः' इत्यादौ भावनामुख्यविशेष्यक एव बोधः। तस्मादेषां वाक्यानां शाब्दबोधप्रकारस्याऽत्रैव सूचन्यन्ते योजिताऽस्ति। तथा च प्रातिपदिकार्थव्यतिरिक्तसुबुपात्तलिङ्ग–संख्या-

व्यतिरिक्तो योऽर्थः, स सर्वोऽपि भावनायामन्वेति । कार्यकारणभावकल्पना-लाघवस्यापह्नोतुमशक्यत्वात् । जैमिनिमहर्षेरनुभवसिद्धो भावनामुख्यविशेष्यकः एव शाब्दबोध इति संक्षेपः ।

**शाब्दिकमते क्वचित् धात्वर्थविशेष्यकशाब्दबोधं विहाय, प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधस्वीकारः**

'फलव्यापारयोर्धातुरि'त्यादिस्वीकुर्वाणैः शाब्दिकैः धात्वर्थमुख्य-विशेष्यकबोधं विहाय, प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधः क्वचिदङ्गीक्रियते, यथा 'तदधीते तद्वेद' इति पाणिनीयं स्मरणम्, तत्र अधीते, वेद वा य इत्येतद्-वाक्यार्थे अणप्रत्ययो विहितः, तत्र व्याकरणमधीते वेदं वेति वाक्यार्थस्य वैयाकरणानां मते सकर्तृकव्याकरणाध्ययनादिरूपतया तद्वाचकत्वमेवाण्-प्रत्ययस्य स्यात् । एवं' तद्वहति रथयुगप्रासङ्गमि'त्यपरं पाणिनीयं स्मरणम्, तत्रापि तद्वहति य इति वाक्यार्थे यत्प्रत्ययो विधीयते, तत्र शाब्दिकमते वाक्यार्थस्य रथाभिन्नकर्मक-सकर्तृकवहनरूपतया तद्वाचकत्वं यत्प्रत्ययस्य वक्तव्यम् । तथा चात्र धात्वर्थमुख्यविशेष्यकशाब्दबोधस्य परित्यागः, तार्किकसम्मतप्रथमान्तार्थ-मुख्यविशेष्यकशाब्दबोधस्य स्वीकारश्चागत्या कर्तव्यो भवति, अत एव शाब्दिकशिरोमणिर्हरिः क्वचित् गुणप्रधानत्वमविवक्षितमित्युपक्रम्याह—

"आख्यातं तद्धित कृतोर्यत्रार्थस्योपदर्शनम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः' ॥ वा. प. इति ।

कारिकार्थस्त्वित्थम्—ताद्धित—कृतोर्यत्किञ्चिदर्थबोधकं विवरणं आख्यातं तिङन्तमित्यर्थः । तत्र विवरण-विव्रियमाणयोर्विशेष्यविशेषणभावविपर्ययः दृश्यते, कृदन्त-तद्धितान्तयोराश्रयप्राधान्यम्, आख्याते व्यापारस्येति भावः ।

अत्र भावप्रधानमाख्यातमितिवचनं प्रमाणयद्भिर्वैयाकरणैः व्याकरण-मधीते वेदं वा इत्यादिवृत्तेः विवरणवाक्ये आख्तातस्य भावप्राधान्यं न स्वीक्रियते, यतो हि वृत्तिविग्रहयोः समानविशेष्यकत्व-समानप्रकारकत्वबोधजनकत्वानु-भवस्य भाष्यप्रामाण्यानाङ्गीकर्तव्यत्वात्, अतस्तादृशोदाहृतस्थले धात्वर्थमुख्य-विशेष्यकपक्षस्य संकोचः क्रियते, तर्हि सार्वत्रिको नियमः न भवितुमर्हति भावप्रधानमाख्यातमिति ।

एवमाश्रये तु तिङः स्मृता इति वदतां वैयाकरणानां मते धात्वर्थविशेष्यः आख्यातार्थः कर्ता पचति व्रजति इति प्रयोगः तन्मते आपादयितुं शक्यते, पाककर्ता व्रजनाश्रय इतिबोधस्य तन्मते सम्भवात्, अतः शाब्दिकानां मते पचति व्रजति इति प्रयोगापत्तिः कथं वारयितुं शक्यते, आख्यातवाच्यार्थी भावना, सा च कर्त्तारं विनाऽनुपपन्ना सती तमाक्षिपति, आक्षिप्तस्य कर्तुः

शाब्दत्वसिद्धये आख्यातस्य कर्तरि निरूढलक्षणामभ्युपगच्छतां भाट्टमीमांसकानां मते पचति व्रजति इति प्रयोगो नापादयितुं शक्यते, यतो हि तैः कर्तुः भावनाविशेषणतया भानमङ्गीक्रियते, किञ्च विषयेऽस्मिन् तार्किका अपि अस्मदनुकूला एव, आश्रये तु तिङः स्मृता इति च धात्वर्थमुख्यविशेष्यकपक्षः अस्मिन् नोपपद्यत इति ।

किञ्च नेदं वेदवचनम , न वा पाणिनीयं सूत्रम् , पातञ्जलभाष्यं वा, अतोऽनुभवानुसारेण तत्र तत्र कार्यकारणभावकल्पनागौरवमपि न दोषमावहति, भवदीयो बाणो भवन्तं प्रहरति, अतो लघुमञ्जूषागततिङर्थनिरूपणप्रकरणस्थो वाक्यसन्दर्भोऽप्युपर्युक्तमेवार्थमुपोद्बलयति, यथा तत्तद्व्युत्पत्त्यनुसारेण तथा तथा बोधस्य तेषां तेषां जायमानत्वेन तथा तथा कार्य-कारणभावस्य सर्वेषामावश्यकत्वेन न तल्लाघव-गौरवविचारस्यायुक्तत्वादिति

## शाब्दबोधाय तात्पर्याख्या वृत्तिः मीमांसकैरङ्गीक्रियते इति पक्षः

वाक्यार्थापरपर्यायस्य शाब्दबोधस्य कारणं किम् , तत्र विवदन्ते वादिनः । तत्र साहितीविद्याकुशलाः पदैर्वृत्त्योपस्थितानामर्थानां शाब्दबोध इति विचारप्रसङ्गे 'तात्पर्याख्यां वृत्तिमाहुः पदार्थान्वयबोधने' सा० द० पृ० इति, तात्पर्यार्थोऽपि केषुचित्' इत्यादौ काव्यप्रकाश—साहित्यदर्पणादिषु तात्पर्याख्या वृत्तिः मीमांसकैरङ्गीक्रियत इति मीमांसकमतमुपक्षिप्य, तस्य निराकरणं दृश्यते ।

अत्र वयं ब्रूमः–मीमांसाग्रन्थेषु भाष्यवार्तिकादिषु शाब्दबोधाय मीमांसकैः तात्पर्याख्या वृत्तिरङ्गीक्रियत इति तु क्वचिदपि न दृश्यते, एवं सति कैर्मीमांसकैरयं पक्षो निरूपितः, यस्य निराकरणमालङ्कारिकैः क्रियते ।

अभ्युपेत्य वयं विचारयामः-

वाक्याधिकरणस्य ।

'साक्षाद्यद्यपि कुर्वन्ति पदार्थप्रतिपादनम् ।<br>
वर्णास्तथापि नैतस्मिन् पर्यवस्यन्ति निष्फले' ॥

श्लो. वा. ७. ३४२.

इति वार्तिकव्याख्याने न्यायरत्नाकरे पार्थसारथिमिश्रो ब्रवीति 'पदार्थेषु पदानां पदार्थबोधजनकीभूतवृत्तिरूपव्यापारपर्यवसानेऽपि पदार्थबोधमात्रस्य प्रमाणान्तरसिद्धत्वेन निष्फलस्यानुद्देश्यत्वात् , वाक्यार्थबोधस्यातज्जन्यत्वेऽपि शब्दप्रयोगोद्देश्यत्वावगतेः शब्दस्य वाक्यार्थे तात्पर्यावगमात् तात्पर्यविषयत्वेन वाक्यार्थस्य शाब्दत्वोपपत्तिरिति' ।

## पञ्चिका तत्त्वबिन्दु-न्यायसुधानामाश्रयणेन तात्पर्यवृत्ते-निरूपणमिति कथनस्य निरासः

नन्वेतादृशतात्पर्यविषयत्वस्य शाब्दत्वप्रयोजकत्वे, पदार्थानामनुद्देश्यत्वेन तदसम्भवादशाब्दत्वापत्तिरिति शङ्कनीयम्, तेषामपि शक्ति-लक्षणागौण्यन्यतमवृत्तिविषयत्वेन शाब्दत्वमुपपद्यते। शालिकाचार्यः पञ्चिकाप्रकरणे वाक्यार्थमातृकायां प्राथम्यादभिधानत्वात्तात्पर्योपगमादपि इत्यत्र तात्पर्यशब्दम् पृ० निर्दिशति, तात्पर्याचार्योऽपि अभिहितान्वयवादे अनेकशक्तिकल्पने गौरवम् अन्विताभिधानवादे एकशक्तिकल्पेन लाघवमुपपादयन्नाह अन्विताभिधानवादिनस्तु तात्पर्यवृत्तीनामिति त० बि० १११। अत एव वार्तिकव्याख्यात्रा न्यायसुधाकृता भावार्थाधिकरणे कृदन्तशब्दस्थले भावनाया अवाच्यत्वेपि तात्पर्यवृत्त्या शाब्दत्वमित्यादिग्रन्थावलम्बेन तात्पर्यस्य वृत्तित्वमङ्गीक्रियत इति वक्तुं न शक्यते। एतादृशोद्देश्यताख्यतात्पर्यस्वीकारे शुकोच्चरितवाक्यस्थले, वेदे च उद्देश्यताख्यतात्पर्यस्यासम्भवेन वाक्यार्थस्य शाब्दत्वं न स्यात्।

## तात्पर्यवृत्तिनिरासस्य निगमनम्

यदि उद्देश्यताख्यतात्पर्यानभ्युपगमेऽपि शब्दनिष्ठस्य तात्पर्याख्यधर्मविशेषस्यैव शब्दत्वानुमेयस्य स्वीकारात् तद्विषयत्वमेव शाब्दत्वप्रयोजकमित्युच्येत, ततोऽक्लृप्तधर्मान्तरस्वीकारे न किञ्चित् प्रमाणमस्ति, तस्मात् तात्पर्याख्यावृत्तिर्मीमांसकैर्नाङ्गीक्रियत इति–ध्येयम्।

## वृत्तिनिरूपणम्

तार्किकाः–अस्मात्पदादमर्थो बोद्धव्यः' इति ईश्वरसंकेतः शक्तिरिति प्राञ्चो मन्यन्ते, नित्यः संकेतः शक्तिः, अनित्यस्संकेतः परिभाषा चेति नवीनास्तु शक्तिवादकृतो मन्वते, अयमेव गोकुलनाथ उपाध्यायेन पदवाक्यरत्नाकरे नित्यानित्यभेदेन वर्णितः, 'तत्र नित्यः ईश्वरसंकेतः अभिधेत्युच्यते' अनित्यस्तु जीवसंकेतः परिभाषा इति चोच्यते–इति

## शक्तिविषये मीमांसकमतम्

अत्र मीमांसका मन्यन्ते शक्तिः पदार्थान्तरमिति, स च शब्दश्रवणानन्तरं प्रतीयमानत्वादर्थः प्रत्याय्यः, शब्दस्तु प्रत्यायक इति प्रत्याय्य-प्रत्यायकभावसम्बन्ध इत्युच्यते, अव्यवधानेन शब्दजन्यप्रतीत्यनुकूला वृत्तिः शक्तिरित्यभिधीयते, अव्यवहितत्वञ्चार्थान्तरप्रतीत्यद्वारकत्वम्, इदञ्च लक्षणावारणाय। तार्किकाः पदार्थशक्तिमभ्युपगच्छन्तोऽपि वह्नौ अतिरिक्तां शक्तिं नातिष्ठन्ते, अतः

तार्किकाणां मते शब्दे शक्तिस्वीकारः, अग्नौतु नेति अर्धजरतीयन्यायः अनुचितः। शाब्दिकानां मते तु अतिरिक्ता शक्तिः बोधजनकत्वरूपा, अर्थात् अनादिबोधजनकतावच्छेदकधर्मवत्त्वम्।

तदुक्तं वाक्यपदीये—

'इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा।
अनादिरर्थैः सम्बन्धः शब्दानां योग्यता तथे' ॥ ति

तत्र शक्तिग्रहः शाब्दबोधे हेतुः, अगृहीतशक्तिकस्य शाब्दबोधानुदयात्। शक्तिग्रहश्च अनादिवृद्धव्यवहाराद् शक्तिग्राहकप्रमाणशिरोमणिभूतात्, तत्र व्याकरणस्य शक्तिग्राहकत्वमसति बाधके, सति त्यज्यते। यथाऽऽख्यातस्य कर्तरि शक्तिः, तत्र परिगणितानां व्यवस्था विश्वेश्वरभट्टेन भाट्टचिन्तामणौ-कृतास्ति। अत्र शक्तिग्रहमित्यादिप्राचीनपद्ये व्याकरणादीनां शक्तिग्राहकत्व-मापाततः प्रतीयते, परन्तु शक्तिग्राहका अनुमानोपमानशब्दा एव, तत्र व्यवहार-प्रसिद्धपदसामानाधिकरण्य–विवरणानामनुमानेऽन्तर्भावः, व्याकरण–वाक्यशेष-कोशानां शब्देऽन्तर्भाव इति, अनुमानोपमानशब्दानामेव शक्तिग्राहकत्वमिति। उपमानस्य शक्तिग्राहकत्वं न्यायवासनया, अत्र व्यवहारशब्देन प्रयोज्यवृद्ध-प्रयोजकवृद्धव्यवहारो बोद्धव्यः, अतः प्रत्याय्य—प्रत्यायकभावलक्षणसम्बन्धः शब्दार्थयोरिति भाट्टमतनिष्कर्षः।

अत्र पदवाक्यरत्नाकरकृता प्राचीनपद्ये व्याकरणस्य प्रकारान्तरे-णोपपत्तिः कृता, तत् तत एव द्रष्टव्यम्।

## लक्षणानिरूपणम्

अभिधेयाविनाभूतप्रतीतिः लक्षणेत्युच्यते–अर्थात् स्वशक्यसम्बन्धवत्वम् लक्षणेति, तस्याश्च पदनिष्ठत्वं स्वाश्रयसम्बन्धिवाचकत्वसम्बन्धेन, गङ्गायां घोषः इत्यादौ गङ्गापदशक्यप्रवाहसम्बन्धो लक्षणा, सा द्विविधा जहत्स्वार्था, अजत्स्वा-र्था चेति, तत्र आद्याया इदं लक्षणं स्वशक्यार्थाविशेष्यकान्वयबोधलक्षणा जहत्-स्वार्था। यथा गङ्गायां घोष इति, अत्र शक्यार्थस्य न भानम्, अपितु लक्ष्यार्थ-स्यैव, द्वितीयाया इदं लक्षणं स्वशक्यार्थविशेष्यकान्वयबोधप्रयोजिका अजह-त्स्वार्था लक्षणा, यथा 'यष्टीः प्रवेशय' इति। अत्र शक्यार्थस्यापि क्रियान्वयः भवति, इयमेव आलङ्कारिकैरुपादानलक्षणेति व्यवह्रियते' अद्वैतवेदान्तिभिस्तु जहदजहल्लक्षणा तृतीया स्वीकृता इति, अन्यत्र विस्तरः, लक्षितलक्षणायाः अपि अनयोरेवान्तर्भावः, अत एव 'व्रीहीन् प्रोक्षति' इत्यादावसत्यप्यविनाभावे

दर्शपूर्णमासैकवाक्यतया अपूर्वसाधनत्वं लक्ष्यते इति मीमांसकानां मर्यादा, एकवाक्यता च कचित्प्रत्यक्षा। यथा सोमेन यजेतेति। कचित्तु प्रकरणाद्यनुमेया भवति, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत, समिधो यजती'त्यनयोः समिदाद्युपेता दर्शपूर्णमासभावना कर्तव्येत्येवंरूपैकवाक्यता कल्प्यते।

## गौणीवृत्तिनिरूपणम्

'स्वशक्यगुणसमानजातीयगुणयोगनिमित्तत्व गौणत्वम्' इति ग्रन्थेन आचार्यखण्डदेवेन गौण्या वृत्तेर्लक्षणमुक्तम, अस्यायमर्थः-स्वं सिंहादिपदम् तच्छक्यं सिंहादि, तस्य गुणाः क्रौर्यादयः, तत्सजातीया गुणाः क्रौर्यादयः देवदत्ते वर्तन्त इति सिंहपदं देवदत्ते गौणमिति युज्यते, अतः स्वशक्यसमवेतगुणवत्ता गौणीवृत्तिरिति। अत्र समवेतत्वञ्च क्वचिदारोपितत्त्वसम्बन्धेन सौन्दर्यस्य तरङ्गिणी, सिंहो देवदत्त इत्यादौ, कचिच्च स्वसमानजातीयगुणवत्तासम्बन्धेन, सिंहो देवदत्तः इत्यत्र सिंहपदेन शक्त्या सिंह उपतिष्ठते, तदनन्तरम् लक्षणया क्रूरत्वोपस्थितिरिति प्राञ्चो मन्वते, नवीनास्तु एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति प्रकारेणैव तदुपस्थितिः, तेन तत्समानजातीयस्य गुणस्योपस्थितिः, पुनः एकसम्बन्धिज्ञानमिति न्यायेन तदाश्रयोपस्थितिरिति, यद्यपि रूपकादिस्थले सौन्दर्य्यस्य तरङ्गिणीत्यादौ आरोपेणापि गौणी दृश्यते, तथापि सादृश्यमात्रेणापि उपमाऽलङ्कारस्थले तस्यापन्हवः कर्त्तुं न शक्यते लोके, अपौरुषेय वेदे आरोपकपुरुषाभावेनारोपो न संभवति, अत आरोपितार्थवृत्तिरिति लक्षणं विहायेदं लक्षणमिति बोध्यम्।

इयं पदे, वाक्ये च, वाक्यलक्षणा समभिव्याहृतसकलपदवृत्तिः, प्रधानपदमात्रवृत्तिर्वेति कौस्तुभानुसारेण पृ २९ टिप्पण्यामवोचाम। मुख्यार्थपरिग्रहेऽनुपपत्तिताचल्लक्षणाया बीजम्। तत्र यथा पदेन पदार्थलक्षणायां वाच्यार्थस्य वाक्यार्थे संबन्धानुपपत्तिः, तथा वाक्यार्थप्रत्ययोद्देशेन प्रयुक्तस्य पदसमुदायात्मकस्य वाक्यस्य येऽभिधेया अनन्विताः पदार्थाः सन्ति, तेषां वाक्यार्थीभावानुपपत्तिरेवान्वितलक्षणाया निदानम्। भाट्टतन्त्ररहस्ये पु० ८९ यत्र आर्षे लाक्षणिके-इत्यादिमूलम्-अत्र-आर्षे-इत्यनेन प्राचीनप्रयोगो विवक्षितः। अत एव उत्तरत्र यत्र तत्स्फुरणपूर्वकं काव्याद्याधुनिकप्रयोग इत्युक्तम्। अन्विताभिधानाभिहितान्वयवादयोस्स्वरूपमस्माभिः प्रकरण पञ्चिकाभूमिकायां कणेहत्य विवेचितम्। विस्तरस्तु तत्रैव द्रष्टव्यः, अन्विते लक्षणेति वाक्याद्भ्राम्यन्तः केचन शाब्दिका अन्विताभिधानवादो भाट्टमीमांसकानामिति वदन्ति, लिखन्ति च। तन्न साधीयः।

## लक्षणा–गौण्योर्भेदः

यत्र स्वशक्यवृत्तिगुणानामेव सम्बन्धत्वेन रूपेण बोधः, तत्र लक्षणा। अत एव 'गङ्गायां घोष' इत्यत्र प्रवाहसम्बन्धस्य संसर्गतयैव भानात् तत्र लक्षणा, गौणीस्थले तु क्रूरत्वादीनां प्रकारतया भानात् गौणीवृत्तिरिति।

तथा च वार्तिकम्—

'अभिधेयाविनाभूतप्रतीतिर्लक्षणोच्यते ।
लक्ष्यमाणगुणैर्योगात् वृत्तेरिष्टा तु गौणता' ॥ तं. वा. पृ. ३५४ इति।

अनेन वार्तिकेन लक्षणागौण्योर्वैलक्षण्यं प्रतिपादयति वार्तिककारः। अयं भावः–अभिधेयाविनाभूत इत्यस्य अभिधेयसम्बन्धत्वेन यत्र प्रकारता, तत्र वृत्तिर्लक्षणा इत्यर्थः। यदा तु सिंहनिष्ठक्रौर्यसमानजातीयक्रौर्यवत्त्वेन देवदत्तस्य प्रतीतिः, तदा गौणीवृत्तिः। अत एव तत्त्वसिद्धिपेटिकायामाचार्यखण्डदेवः गौणीलक्षणयोर्वैलक्षण्यमित्थमाचचक्षे । यथा—अत एवोक्तं 'अभिधेयाविनाभूते प्रवृत्तिर्लक्षणेष्यते' इति इदं हि नाविनाभावसम्बन्धेनैव लक्षणेत्येवंपरम्। सम्बन्धान्तरेणापि तस्या दृश्यमानत्वात्। अपि तु यस्मिन् बोधे यत्सम्बन्धित्वम् प्रकारतया अविनाभूतम्, तस्मिन् बोधे या शब्दस्य वृत्तिः सा लक्षणेत्येवंपरम्। अत एव सिंहो देवदत्त इत्यादौ सिंहसम्बन्धी–देवदत्त इत्येवं यदा बोधः, तदा लक्षितलक्षणेत्यपि द्रष्टव्यम्–इति।

## व्यञ्जनाया वेदेऽनुपयोगादस्वीकारः

व्यञ्जना वृत्तिश्चतुर्थी इति आलङ्कारिका मन्वते, तस्य वेदेऽनुपयोगात् मीमांसकैर्नाङ्गीक्रियते। यथा वैयाकरणैः शक्तिरेकैवाङ्गीक्रियते 'सर्वे सर्वार्थ वाचकाः" इति न्यायात्। तन्मते लक्षणोच्छेदापत्तिः न दूषणमिष्टत्वादित्युच्यते शाब्दिकैः, तथैवालङ्कारिकाऽनुभवसिद्धाऽपि व्यञ्जना लाघवान्न स्वीक्रियते व्यञ्जनोच्छेदापत्तेरदूषकत्वमेवेति । अत एव शक्तिवादमाधवीये व्यञ्जनावृत्तेर्खण्डनं दृश्यते, 'अन्ते चोपसंहरति' बहुविचारोपसंहारे अनयोः समीचीनत्वासमीचीनत्वे सुधीभिर्विभाव्ये श. मा. पृ. २–३ इति।

वेदान्तकल्पलतिकायामपि मधुसूदनसरस्वत्यः तत्रानास्थामेव वर्णयन्ति, अतोऽपौरुषेये वेदे व्यञ्जनावृत्तेरनुपयोग इत्याकलयन्ति मीमांसकाः–इति।

## युगपत् वृत्तिद्वयविरोधविचारस्तार्किकदृष्ट्या

जातिशक्तिवादे व्यक्तेर्लक्षणया मानमित्यङ्गीक्रियते, तर्हि शक्तिलक्षणयोरेकदा प्रसरात् विरोध इति न मन्यन्ते तार्किकाः, यथा गङ्गायां घोषमत्स्यौ स्तः

इति वृद्धव्यवहारो दृश्यते, यदि युगपत् वृत्तिद्वये विरोधः स्यात् , तर्हि गवादिपदानां जातौ शक्तिरितिपक्षोऽसङ्गतः स्यात् । अतो विरोधो नास्ति इति केचनमन्वते, अत एव जगदीशतर्कालङ्कारेण गङ्गायां घोषमत्स्यौ स्तः इति वाक्यात् शाब्दबोध न विरोधो यौगपद्यापत्तेरित्यादिवदता वृत्तिद्वयस्येति सूचितमन्यथा वृत्तिद्वये यौगपद्यमादाय तत्र शाब्दबोधोपपत्तौ तन्निषेधोऽसङ्गतः स्यात् इति, अत एव गौर्जायते, गौर्नश्यति इत्यादौ गोत्वादौ शक्तिः नैव, गवादिपदेन गोत्वादिविशिष्टा व्यक्तिर्बोध्यते, तत्र गोत्वस्य शक्त्या बोधः, गोव्यक्तेश्च लक्षणया बोधः, तात्पर्यानुपपत्तेः लक्षणाबीजस्य सत्त्वात्, तत्र व्यक्तीनामनन्तत्वेनान्यलभ्यतया तत्र शक्तिर्न कल्प्यते,

अत एवोक्तं श्लोकवार्तिके—

'जातेरस्तित्व-नास्तित्वे न हि कश्चिद्विवक्षति ।
नित्यत्वाल्लक्षणीयाया व्यक्तेस्ते हि विशेषणे' ॥ इति ।

अत्र शब्दशक्तिप्रकाशिकायाः व्याख्यात्रा कृष्णकान्तपञ्चाननेन वस्तुतस्त्वित्यादिकल्पान्तरानुधावने बीजमुपदर्शयता अयमाशयः उक्तः । ननु तात्पर्यसत्त्वे शक्य-लक्ष्ययोरेकदाऽन्वयबोधस्तु नव्यैः स्वीक्रियते, कथमन्यथा गङ्गायां घोषमत्स्यौ स्तः इत्यत्रोभयान्वयबोधः, न च युगपत् वृत्तिद्वये विरोध इति प्रवादस्यासङ्गतिः स्यात् , एकधर्मावच्छिन्नवृत्तिभ्यामन्वयबोधस्वीकार एव तस्य तात्पर्यात्, एवं आकाङ्क्षाग्रन्थे मणिकारोऽप्याह–'इत्यादिना', तत्रैव रामरुद्रेण ननु गङ्गायां घोषमत्स्यौ स्तः इत्यादाविव प्रकृते वृत्तिद्वयस्वीकारो न क्षतिकरः इत्यत आह वस्तुतस्त्वितिग्रन्थोऽवतारितः, अतः 'गङ्गायां घोषमत्स्यौ स्तः' इति वाक्यात् शाब्दबोधो भवत्येवेति । न चैवं इतरथा भक्ति-शक्तिभ्यामिति शब्दशक्तिप्रकाशिकाग्रन्थविरोध इति वाच्यम् । तदीयवस्तुतस्तुकल्पानुवधावनेन तत्र तस्य निर्भरता नास्तीत्यवगम्यत इति ।

अत्रेदं बोध्यम्–वाक्याधिकरणवार्तिके उपसर्गाणां वाचकत्वम् , द्योतकत्वं वेति विचार्य,

'वाचकद्योतकत्वं वा नातीवात्रोपयुज्यते ।
तद्भावाद्वाचकत्वं वा परस्यानुग्रहोऽस्तु वा' ॥

इति निश्चित्य, नञः कथं सम्बन्ध इत्याक्षेपः कृतः, समाहितश्च । तथाहि-नञस्त्रेधा हि वृत्तिः—पर्युदासाभावप्रतिषेधाः । यत्र नाम्ना सम्बध्यते, अब्राह्मण इति, ब्राह्मणभिन्नं क्षत्रियमभिधत्ते, यत्र धातुना सम्बध्यते, नेक्षेतेत्यत्रानीक्षणसंकल्पं ब्रूते, घटो नास्तीत्यादौ घटाभावं वदति । यथा भावो

वस्त्वात्मकः, तथाऽभावोऽपि वस्त्वात्मको भवतीत्यनुपलब्धिपरिच्छेदे उक्तम्। एवञ्च घटो नास्तीत्यत्र सत्त्वम्, असत्त्वं वा नाभिधीयते, अपितु सदसत्त्वसाधारणं घटस्य स्वरूपमात्रम्। तस्य परिच्छिन्नत्वात् घटस्य क्वचित्सद्भाववत् क्वचिदसत्त्वमिति विरोधो न भवति। अन्यथा पटोऽस्तीति बुद्धिर्न स्यात्। जातिशक्तिवादिनां मीमांसकानां जातेर्नित्यत्वात् कथमसत्त्वावधारणमिति न शंकनीयम्। नास्तीत्यस्य व्यक्तिविशेषणत्वमंगीक्रियते, जातेः शब्दार्थरूपायास्तदसंभवात्। यथोक्तं वार्तिके

'जातेरस्तित्व-नास्तित्वे न हि कश्चिद्विवक्षति।
नित्यत्वाल्लक्ष्यमाणाया व्यक्तेस्ते हि विशेषणे'॥ इति।

जातौ शक्तिः, व्यक्तौ निरूढलक्षणेति मीमांसकमतनिराकरणावसारे न्यायग्रन्थेषु शब्दशक्तिप्रकाशिकायाम्, शक्तिवादे च श्लो. वा. २ पद्यमिदं मण्डनमिश्रीयम्। यथा—व्यक्तेरपि बोधः शब्दादेव, न त्वाक्षेपादितः व्यक्तिशाब्दबोधे शक्तिविरहो नोपपत्तिं प्रयोजयति, लक्षणात एव तदुपपत्तेरिति मण्डनाचार्यमतम्, तदुक्तमित्यादिनावतारितं पद्यमिदम्, व्याख्यातञ्च—अस्तित्व-नास्तित्वे-उत्पादविनाशाविति'ति श. प्र. ११३ चिकित्सितमिति मन्तव्यम्।

## युगपद्वृत्तिद्वयविरोधशङ्का जातिशक्तिवादिनाम्मीमांसकानां मते

गवादिपदानां जातौ शक्तिः, व्यक्तौ निरूढलक्षणेत्यङ्गीकारे युगपद्वृत्तिद्वयविरोधः प्रसज्यते इत्याशंका जायते। अतो जातिशक्तिवादे कथं लक्षणया व्यक्तेर्बोध इति। अत्रेदं विचारणीयम्—एकस्मिन्पदे वृत्तिद्वयविरोध एकबोधजनने आपाद्यते, अथवा बोधद्वयजनने वेति द्वेधा विकल्पः 'तत्र चरमपक्षेऽपि बोधयोः यौगपद्ये वृत्तिद्वविरोध आपाद्यते, अथवा बोधयोः क्रमिकत्वे वृत्तिद्वयविरोधः आपाद्यत इति द्विधा विकल्पः, तत्राद्यपक्षद्वयमनभ्युपगमादेव पराहतम्। न तृतीयः-शक्यार्थस्य पदान्तरार्थान्वयप्रमितेः प्रागेव लक्षणाङ्गीक्रियते। तदा वृत्तिद्वयविरोधस्यानुन्मेषात्। यथा 'गङ्गायां घोषः' इत्यत्र गङ्गापदाद्गङ्गापदशक्यप्रवाहोपस्थितावपि, तस्य घोषाद्यन्वयप्रमितेः प्रागेवान्वयानुपपत्त्या तीरलक्षणायामपि न वृत्तिद्वयविरोधः। गङ्गातीरवृत्तिर्घोष इति निष्प्रत्यूहम्, शाब्दबोधोदयादिति।

## तत्र दूषकताबीजविवेचनम्

अपि चेदं विचारणीयम्—तत्र दूषकताबीजं किमिति जिज्ञासायां 'सकृदुच्चरितम् पदं सकृदेवार्थं प्रत्याययती'त्येवंविधनियमभङ्गरूपं समस्ति। अतस्तत्र वृत्ति-

द्वयविरोधोऽङ्गीक्रियते । यथा यत्र शाब्दबोधप्रमोत्तरकालं तस्यैव पदस्य वृत्त्यन्तरेणार्थान्तरप्रत्यायकत्वम्, तत्रैव तद्दूषणम् । एवञ्च प्रकृते शक्त्या जातेरुपस्थितावपि तस्याः कर्मत्वाद्यन्वयप्रमितेः प्रागेवान्वयानुपपत्तिवशाद्व्यक्तिलक्षणायामङ्गीक्रियमाणायामपि न क्रमिकबोधानांगीकारेण वृत्तिद्वयविरोधेन दूषकताबीजम् । अत एव 'पशुना यजेत' इत्यादौ यत्र करणत्वेनान्वयेन नानुपपत्तिः, तत्र जाति-गुणयोरपि करणत्वान्वयद्वारा क्रियान्वयोपपत्तेः, लक्षितव्यक्तेस्तदन्वय इत्याकृत्यधिकरणकौस्तुभे उक्तं सङ्गच्छते ।

## मीमांसकानां मते शाब्दबोधवर्णनम्

तन्मते शाब्दबोधप्रकारश्चेत्थम्–तथा हि वाक्यार्थस्संसर्गः, स च लक्षणया भवति । लक्षणा च स्वबोध्यसम्बन्धरूपा, सा च ज्ञातैव कारणम् , अतः पदेषु श्रुतेषु पदार्थज्ञाने जाते तावता पदानां पर्यवसानेऽपि वाक्यतात्पर्यान्यथानुपपत्त्या वाक्यस्य वाक्यार्थे लक्षणेति ।

नन्वभिधेयाविनाभावनिमित्ता लक्षणा, न च पदार्था वाक्यार्थविशेषेणाविनाभूताः, स कथं लक्ष्यत इत्युच्यते, नावश्यमविनाभावनिमित्ता लक्षणा, अपि तु तत्रैकवाक्यता निमित्तम् ।

## लक्षणायामेकवाक्यतादिनिमित्तम्

इयञ्च लक्षणा समभिव्याहारगम्या, क्वचित्तु प्रकरणानुमेया लक्षणासाधारण्येन प्रवृत्तावप्येकवाक्यतया नियम्यत इत्यनुभवबलादङ्गीक्रियते । एकवाक्यता च पदानां परस्परसमभिव्याहारः । यथा युगपदधिकरणवाचितायामर्थादेकेन पदेन पदार्थद्वयस्यैकपदोपस्थापनम्, तत्र द्वन्द्वो भवति । तत्र 'धवखदिरौ छिन्धि' इत्यत्र खदिरप्रातिपदिकं द्विवचनोपपत्तयेऽर्थान्तरं लक्षयदपि धवमेव लक्षयति, नार्थान्तरम् । तस्मादन्वयविशेषोऽविनाभावादिना सिध्यन्नेकवाक्यतावशादेव सिध्यति । अत एव वाक्यार्थो लाक्षणिक इति मीमांसकानां समुद्घोषः ।

## निरूढादिभेदेन लक्षणाया भेदः

लक्षणाया विधान्तरम् । यथोक्तमरुणाधिकरणे—

> निरूढा लक्षणाः काश्चित्सामर्थ्यादभिधानवत् ।
> क्रियन्ते साम्प्रतं काश्चित् काश्चिन्नैव त्वशक्तितः' ॥

तं० वा० पृ० ६८२ इति ।

अत्र मूलेऽशक्तित इति पाठः । काव्यप्रकाशकृता, रहस्यकृता च अप्रयोगत इति पाठः स्वीकृतः इति बोध्यम् ।

अस्यायमर्थः—केषुचिदर्थेषु शक्तिवदेवानादिकालप्रवृत्तत्वेन निरूढाः लक्षणा इत्युच्यन्ते । यथा शुक्लादिशब्दाः गुणवाचिनः, निरूढलक्षणया गुणिवाचकाः, 'गुणे शुक्लादयः पुंसी'त्यमरसिंहेनाऽभिधानात् । केषुचित्क्रियन्ते, यथा रथाङ्गनामा चक्रवाक इति, प्रयोजनवशादिति शेषः । केषुचित्तु कर्तुमपि न शक्यते । यथा रूपं वस्त्रमिति । इदं च पद्यं काव्यप्रकाशस्य सप्तमोल्लासे नेयार्थरूपदोषनिरूपणप्रसङ्गे निरूढा लक्षणा, प्रयोजनवती लक्षणा इति लक्षणाद्वयं रूढितः प्रयोजनाच्चोपपाद्य, यां निषिद्धलक्षणेत्याचक्षते, सैव नेयार्थरूपदूषणमिति विवेचितमस्तीति विदाङ्कुर्वन्तु विद्वांसः ।

एवमेव भाट्टतन्त्ररहस्ये प्रतिपादितं दृश्यते, अरुणाधिकरणवार्तिकपर्यालोचनयाऽस्य वार्तिकस्यायमाशयः प्रतीयते, तथाहि—शुक्लशब्द-रूपशब्दयोः गुणवाचित्वाविशेषेऽपि, ये शुक्लादिशब्दा जाति-गुणवाचिनो भूत्वा, द्रव्यं प्रत्याययन्ति, तेषामभिधेय-लक्ष्यमाणयोर्वस्तुनोर्विवेकाभावात् प्रतीतावप्यविवेकः स्थित एव, स च परीक्षकैः कथञ्चिन्निर्णीयाऽपनीयते, लौकिकानान्तु मुख्यबुद्धिरेव भवति, एवं रूपादिशब्देष्वपि लक्षणया मतुब्लोपः कथं न भवति, कथं वा लक्षणावृत्तिः शास्त्रेणान्वाख्यायते इति शंकापनोदनाय—वार्तिकमवतारितम्—'निरूढा लक्षणा' इत्यादि । अयमर्थः—केषुचिच्छुक्लादिशब्देषु अभिधानवदेव लक्षणाऽप्यनादिकालप्रवृत्तत्वेन निरूढा लक्षणेत्युच्यते, केषुचित् क्रियते यथा रथांगनामा चक्रवाक इति । एवञ्च पटश्शुक्ल इति गुणवचनस्तद्वति निरूढलक्षणया प्रयुज्यते, रथांगशब्दश्चक्रवाकशब्दैकदेशपर्यायस्तद्वाच्ये सांप्रतिकलक्षणया प्रयुज्यते, उभयोर्लाक्षणिकत्वाविशेषेऽपि प्रयोगबाहुल्य-तदभावाभ्यां निरूढ—सांप्रतिकते बहुलं प्रपञ्चते वेदाश्चारुणयेति, कवयश्च रथांगनामा चक्रवाक इति ।

## निषिद्धलक्षणाया निरूपणम्

यत्केषु चित्पुनः कर्तुमपि न शक्यते, यथा रूपादिषु, उदाहृतञ्च रूपम् वस्त्रमिति, इमामेव प्रतिषिद्धा लक्षणा अप्रयुक्तलक्षणेति च व्यवहरन्ति, अत्रेयमाशंका जायते यदिह संबन्धेऽविशिष्टे कथं लक्षणा न भवतीति, तत्रोत्तरमाहाभिधानवदिति, अयमाशयः—गुणवाचित्वे समानेऽपि शुक्लादिशब्दानाम् गुणोपसर्जनद्रव्यवाचित्वम् , न रूपादिशब्दानाम् , एवं ममापि लक्षणेति ।

## शुक्लशब्द-रूपशब्दयोर्वैलक्षण्यनिरूपणम्

तत्रेदं बोध्यम्—अभिधानशक्तिस्वभाविकी, लक्षणा तु संबन्धा-

दधिकं नापेक्षत इति । उच्यते—सत्यमेवैतत्—दर्शनबलात्सामर्थ्यभेदम-पेक्षते शुक्लादिशब्दानां स्वसमवेतगुणद्वारेण द्रव्ये वृत्तिः, इदञ्च रूपादिष्व-विशिष्टमिति, द्रव्ये वृत्तिः कुतो न प्रसज्यते इति, तत्रावश्यं गुणगतस्सामर्थ्य-भेदः स्वीकर्तव्यः, येन केचन शब्दा गुणिपरा अपि भवन्ति, अन्ये तु गुणप्रधानाः इति, यथा सामर्थ्यभेद आस्थीयते ।

यथोक्तम्—

'तस्माद्यथैव शब्दानां शक्तिभेदोऽभिधां प्रति ।
प्रत्येतव्यस्तथाऽर्थानां लक्ष्यार्थान्तरगोचरः' ॥ तं० वा० पृ० ६८४ इति ।

एवञ्च रूपादिशब्दानामभिधेयमात्रप्रत्ययेन निवृत्तिव्यापारत्वात् न शब्दशक्तिः प्रमाणवती, अतश्च रूपादीनां लक्षणा शक्त्यभावात् मतुबा विना न 'द्रव्ये वृत्तिर्भवितुमर्हति, तस्मात्' रसादिभ्यश्च—पा० सू० ५-२-९५ इति विहित-प्रत्ययान्तरनिवृत्त्यर्थं मतुब्नियमपुनश्श्रुतिरमुमेवार्थं द्योतयति, यत्रूपादिषु-द्रव्यविशेषणत्वेन प्रतीतिः, शुक्लादिषु विशेष्यत्वेन प्रतीतिः । अत एवाऽनादि-कालप्रसिद्धार्थत्वेनाऽस्या लक्षणाया मतुब्लोपाम्नानेनानुगमः, या त्वादिमती नात्यन्तप्रसिद्धा, नासौ शास्त्रेणाऽनुगम्यते इति, मतुब्लोपाम्नानं—लक्षणायाः शास्त्रेण अन्वाख्यानञ्चोपपद्यत इति । तथा च मतुब्लोपान्वाख्यानम्, लक्षणायाश्शास्त्रेणानुगमश्चेति । अस्य विस्तरो वार्तिकतात्पर्यं कौस्तुभे द्रष्टव्यः पृ—१५५—१५७ । एवं सत्यपि मम्मटादिभिरालङ्कारिकैः रूढितोऽथ प्रयोजनादिऽत्यस्य पादेयत्वसूचनाय स्वाभिमतेऽर्थे योजनं स्वप्रज्ञा-विलसितमात्रमिति ध्येयं विबुधैः ।

## उद्देशगता संख्या न विवक्षिता, उपादेयगता संख्या विवक्षितेति प्रायोवादस्योपपादनम्, शाब्दिकमतदूषणञ्च ।

ग्रहैकत्वाधिकरणे 'ग्रहं सम्माष्टि' इति वाक्यमुदाहृत्य विचारः कृतोऽस्ति । तत्राधिकरणे ग्रहमित्येकवचनोपात्तस्यैकत्वस्य विवक्षाऽस्ति नवेति सन्दिह्य, श्रुतत्वादेकत्वं विवक्षितम् । एकस्यैव ग्रहस्य सम्मार्गः कर्तव्य इति पूर्वपक्षः कृतः । सिद्धान्ते एकत्वं उद्देश्यतया विवक्षितम्, विधेयतया विवक्षितं वेति द्वेधा-विकल्प्य, पक्षद्वयेऽपि ग्रहस्य, सम्मार्गस्य चोद्देशस्य, विधेयस्य च श्रवणा-देकत्वस्याप्युद्देश्यतया विवक्षणे भावनाया एककर्मत्वभङ्गप्रसङ्गः, विधेयत्वपक्षे विधेयभेदाद्विध्यावृत्त्या ग्रहं सम्मृज्यात्, यं सम्मृज्यात् तच्चैकमिति विध्या-वृत्तिलक्षणो वाक्यभेदो दुरुद्धर आपद्यते । अत उद्देश्यविशेषणमविवक्षि-

तमिति। पश्वेकत्वाधिकरणे च 'पशुना यजेते'त्यत्रैकत्वमविवक्षितमिति पूर्वपक्षयित्वा, विवक्षितमिति सिद्धान्तः कृतः। तेनोद्देश्यविशेषणमविवक्षितम्, उपादेयविशेषणञ्च विवक्षितमिति सिद्धान्त इति प्रायोवादः।

## तत्र समीक्षा

अत्रेदं विचारणीयम्—विवक्षायाम्, अविवक्षायां वा किं कारणमिति। अत्राभिधीयते। सर्वत्र विध्यपेक्षैव कारणम्। अविवक्षायाञ्च विध्यनपेक्षैव। यद्यपि विचारप्रसङ्गे उद्देश्योपादेयपदयोर्निर्देशोऽस्ति। परं तु प्रायिकमिदम्, अर्थादुद्देश्यत्वोपादेयत्वे प्रायिके इति विवेक्तव्यम्।

'नोपादेयत्वमेवैकं कारणत्वेन संमतम्।
विशेषणविवक्षायां कारणं हि महद्विधिः'॥ तं० वा० पृ० २१२ इति।

अयम्भावः—यथा भावनाया एककर्मकत्वनियमः, तथैवैककरणकत्वनियमोऽपि। यावत्पर्यन्तमुपादेयस्वरूपम्, उद्देश्यस्वरूपं वा न पर्यवस्यति। तावद्विधिरवसीदन् विशेषणमप्याकांक्षति। अत एव 'यस्योभयं हविरार्तिमार्छेत्' इत्यत्र भाष्यकृता शबरस्वामिनोक्तम् मृष्यामहे हविषो विशेषणमिति शा० भा०। तथा चायमर्थः पर्यवस्यति-यद्विधेयविशेषणं तत् विवक्षितं भवति। यतो हि विधेयमपूर्ववच्छब्दैकसमधिगम्यम्। यावदुपात्तविशेषणग्रहणेन विशिष्टविधेयप्रतीतिपर्यवसाने सत्यन्यतरपरित्यागे कारणाभावात्तथाभूतमेव विधेयं विधिर्विवक्षति। अनुवाद्यन्तु विधेयं विधातुं यथाज्ञातमेव शब्देनोपस्थाप्यते। अतोऽनुवाद्यमपूर्ववन्न शब्दैकवेद्यं भवति, तस्यैव केन चिदुपलक्षणेन यथाज्ञातस्योपस्थितौ सत्यां विधेयसङ्क्रान्तव्यापारो विधिः, अनुवादार्थं विशेषणान्तरं न विवक्षितुमुत्सहते, अनाकांक्षितत्वात्।

न वा विधानार्थम्, विध्यावृत्तिलक्षणवाक्यभेदप्रसङ्गात्। अत एव यत्रानुवाद्यस्यापि विशेषणविवक्षामन्तरेणोद्देश्यत्वमेव न सम्भवति। तदसम्भवे विधिविभक्तिरवसीदन्ती विशेषणमपेक्षते, तत्रानुवाद्यविशेषणमपि विवक्षितमेव भवतीत्यसकृदावेदितम्। तस्माद्विध्यपेक्षानपेक्षे व विवक्षाविवक्षे। एतेनेदृशं मीमांसकरहस्यमस्पृशन् भूषणसारः संख्याविवक्षानिर्णयनामकम् प्रकरणमारभमाणः प्रतिजानीते—

'लक्ष्यानुरोधात्सांख्यायास्तन्त्रातन्त्रे मते यतः।
पश्वैकत्वादिहेतूनामाश्रयणमनाकरम् ॥
विधेयं भेदकं तन्त्रमन्यतो नियमो न हि।
ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम्' ॥ इति ॥

मीमांसकव्यवस्थैव पद्याभ्यां तदुक्तदूषणानि कवलीकरोतीति, तदीया व्यवस्थाऽनवकाशेति वेदितव्यम्।

### भाट्टतन्त्ररहस्यस्य मूलम्

तत्रभवान् गागाभट्टो महामीमांसको भाट्टचिन्तामणिनामकं ग्रन्थम् प्रणिनाय, स च ग्रन्थो जैमिनिसूत्रार्थविवरणरूपो द्वादशाध्याय्या अस्तीति प्रसिद्धिः, परं महावैयाकरणेन पं० बालशास्त्रिणा पण्डितपत्रे तर्कपादः संशोध्य-प्रकाशं नीतः। ततः तात्याशास्त्र्यपरनामधेयेन रामकृष्णशास्त्रिणा शोधयित्वा चौखम्भासंस्कृतमालायां प्राकाशि, तत्र प्रथमपादस्य तर्कपाद इति नाम मीमांसककुले प्रसिद्धम्।

तत्र वृत्तिकारमतनिरूपणावसरे आचार्यशबरस्वामिना प्रत्यक्षादीनि अनुपलब्धिपर्यन्तानि षट् प्रमाणानि निरूपितानि, तदेव पुरस्कृत्य गागाभट्टः सूचीकटाहन्यायेन शब्दविषये बहुवक्तव्यत्वादन्ते शब्दखण्ड-विचारं प्रवर्तयामास। तत्र (१) धात्वर्थवादः (२) आख्यातार्थवादः (३) लकारार्थवादः (४) प्रातिपदिकार्थवादः (५) सुबर्थवादः (६) समासवादः समासशक्तिवादः (७) नञर्थवादः इति एते विषया विचारिताः। तदेव मूलम् मनसि निधाय आचार्यखण्डदेवो गागाभट्टस्यान्तेवासी भाट्टतन्त्ररहस्यं नामकम् शाब्दबोधविचारात्मकं प्रबन्धराजं प्राणैषीत्। यत्रादितः पञ्च विषयाः प्रत्यपादि-षत। अतः प्रकृतप्रबन्धस्य विश्वेश्वरोपज्ञः तर्कपादीयः शाब्दबोधविचार एव मूलमिति निश्चीयते।

अधोनिर्दिष्टया तालिकया स्पष्टमिदमवगम्यते—यत् तदेव भाट्टतन्त्ररहस्य-मेवानुसरतीति। तत्र दिङ्मात्रमनया तालिकया सूच्यते। अनया विज्ञा भाट्टचिन्तामणिक्रम एव प्रकृतप्रबन्धस्य मूलमित्यवगच्छेयुरिति।

| भाट्टचिन्तामणौ | भाट्टतन्त्ररहस्ये |
|---|---|
| (१) सकर्मकत्वञ्च—अविवक्षाविरह-विशिष्टकर्माकांक्षधातुत्वम्, आकांक्षायाः शब्दवैचित्र्यकृत-त्वादेकस्य धातोस्सकर्मत्वाकर्म-कत्वे | (१) अविवक्षाविरहविशिष्टकर्माकांक्ष-धातुत्वं सकर्मकत्वम्, तदभावोऽ-कर्मकत्वम् आकांक्षा च समभि-व्याहारात्मिका शब्दधर्मः। |

| | |
|---|---|
| (२) कर्म द्विविधम्-'कतुरीप्सिततमं कर्म तथा युक्तञ्चानीप्सितम्' इति व्याकरणात्। तत्र तच्चतुर्धा, उत्पाद्य-प्राप्य-विकार्य-संस्कार्य-भेदात्-घटं कुरुते, पयो दोग्धि, व्रीहीनवहन्ति, व्रीहीन् प्रोक्षतीति | (२) कर्तुरीप्सिततमं कर्म तथा युक्तं ञ्चानीप्सितमिति सूत्रात्। तच्च कर्म चतुर्विधम्-उत्पाद्यम्, आप्यम्, विकार्यम्, संस्कार्यं चेति घटं करोति, घटं जानाति, व्रीहिनवहन्ति, व्रीहीन् प्रोक्षतीति |
| (३) प्रयत्नः आख्यातार्थः। | (३) आख्यातवाच्यः प्रयत्न इत्यादि। |

## अस्य परिच्छेदचतुष्टयमिति प्रवादः, प्रकृतग्रन्थपरिमाणञ्च

अयञ्च खण्डदेवाचार्यस्तदन्तेवासीति प्रसिद्धिर्मीमांसकनिकाये, तदेतदनुपदमेव वक्ष्यते। तत्र तदनुसारेण भाट्टतन्त्ररहस्यस्यापि परिच्छेदचतुष्टयमासीदिति विद्वत्समाजे प्रसिद्धिः, काञ्चीसंस्करणञ्च भूमिकायां तथैव निर्दिशति। अतोऽस्य परिच्छेदचतुष्टयमस्तीत्यूहितुमस्त्यवकाशः, परन्तु तदुपलम्भकसामग्र्यभावात् न निर्णयः। अतः प्रकृतसंस्करणं प्रथमपरिच्छेदमेव सम्पादयति। अस्मिन् प्रबन्धे तार्किकैः, शाब्दिकैः विवेचितान् विषयान् निरस्य, स्वाभिमतमर्थपरिष्कारपद्धत्या व्यवस्थापयति, मीमांसाशास्त्रे सन्ति भूयांसः प्रमेयबहुला ग्रन्थाः, तथापि भाट्टतन्त्ररहस्यं सर्वानपि ग्रन्थानतिशेते, अत्र मीमांसायां धर्माधर्मादीनाम् लक्षणपरिष्कारप्रणाली आचार्यखण्डदेवेनैवोपबृंहिता, अध्वरमीममांसकानाम् शाब्दबोधप्रणाली मीमांसकाभिमत आख्यातार्थः। धात्वर्थः प्रथमादिसप्तम्यन्तानां विभक्तीनामर्थाः परिष्कृत्य शाब्दिक-तार्किकमतान्तरपराकरणेन सम्यगुपपादिताः सन्ति। अतोऽस्य ग्रन्थस्य शब्दसौष्ठवम्, अर्थगाम्भीर्यञ्च अनितरसाधारणं मादृशैः न परिच्छेत्तुं शक्यते, किं पुनर्वर्णयितुम्, इति शाब्दबोधविनोदरसिकाः पण्डितपुण्डरीका एवात्र परं प्रमाणम्।

## पातञ्जलभाष्यानुसारी चायमाचार्य इति कथनम्

अयञ्चाचार्यः पाणिनीयसूत्रार्थवर्णने, तत्तदर्थविवेचने च भगवन्तम् भाष्यकारं पदे पदे स्मरति, तदीयवचनानि स्वोक्तिदार्ढ्यायोपन्यस्यति, तदुक्तार्थान् ईषदपि अन्यथयितुं नोत्सहते, भाष्यकारवचनप्रामाण्योपन्यासेन भर्तृहरिमतम्, कैय्यटमतञ्च निराकरोति। किं बहुना भाष्यकारमतावलम्बनेन सर्वानपि ग्रन्थकारान् अनादृत्य वाक्यार्थं वर्णयति।

**पातञ्जलभाष्यस्य निर्देशः**

यथा—

१—पचति भवतीति भाष्योदाहृतप्रयोगानापत्तेः ४९
२—उष्ट्रासिका आस्यन्ते इति महाभाष्यकारवचनात् ५७
३—महाभाष्यकारीयाः ८१ ४—महाभाष्य
५—महाभाष्योदाहृतेषु ६—क्रियाकारकयोस्सम्बन्धस्येति महाभाष्यम्
७—महाभाष्यकारीयम् ८—महाभाष्यकारीयः ९३
९—महाभाष्यकारीयप्रयोगः ११६, १०–भाष्यकारः १२०
भाष्यसिद्धत्वात् १२० भाष्यकारेण १२० भाष्यकारः १२०
११–भाष्यकारेण १३३, १२–भाष्यप्रयोगात् १२७
१३–भाष्यकृता १४०, १४–महाभाष्यकारीयवचनानुपपत्तिः १४१
१५–भाष्यव्याख्यानात् १४२, १६–भाष्यकारेण पाठात्
१७–भाष्यविरोधात्
१८–भाष्यकारेण

**वाक्यपदीय-कैय्यटमतयोस्समीक्षा**

अयं च ग्रन्थकारः प्रकृते प्रबन्धे वाक्यपदीयोक्तम् , कैय्यटोक्तमर्थजातं च अधोनिर्दिष्टेषु स्थलेष्वनूद्य निराकरोति। यथा चतुर्थीविभक्त्यर्थविचारप्रस्तावे क्रियाग्रहणं कर्तव्यमिति वार्तिकप्रत्याख्यानं कृतमित्युपक्रम्य तन्मतमनूद्य पृ० ११९ निराकरोति। वाक्यपदीयकैय्यटमतखण्डनेन क्रियाग्रहणं कर्तव्यमिति वार्तिकस्यावश्यकत्वमित्युपवर्ण्य, तत्रैव भाष्य-वृत्त्योर्नैर्भर्य्यमुपवर्णयति।

एवम्–'स्पृहेरीप्सितः' इति सूत्रार्थवर्णनावसरे वाक्यपदीयप्रभृतय इत्यारभ्य वस्तुतस्त्वित्यादिना तन्मतं निराकृत्य, तदर्थं प्रतिपादयति। तत्र स्वोक्तेऽर्थे आनुकूल्यं पदमञ्जरीकारादीनां निरूपयति पृ० १२१।

एवम्—'ध्रुवमपायेऽपादानम्' इति सूत्रस्य वाक्यपदीयरीत्या व्याख्यानमुपक्रम्य 'वाक्यपदीयादौ सूत्रं व्याख्यातमित्यादिना····इति परकीया इत्यन्तेनानूद्य, लक्षणायाम् , एकदेशान्वये च प्रमाणाभावादित्यादिना तद्व्याख्यानमदूदुषत्। स्वाभिमतं चार्थं वर्णयाम्बभूव।

एवम्–क्रियार्हाणां क्रियाकर्तृत्वे विवक्षिते' इति वार्तिकस्य 'यस्य च भावेन भावेन भावलक्षणम्' इत्यनेनैव सिद्धे इदमनारम्भणीयमिति केचिदित्यादिना केषांचित्पक्षमुपन्यस्य 'कैय्यटादयस्तु लक्ष्यलक्षणभावाविवक्षायां सप्तमीविधानार्थमित्याहुरिति यनेन तन्मतमनूद्य, तच्च व्याख्यानम

लक्ष्यलक्षणभावातिरिक्तस्य सम्बन्धस्यास्माद्वाक्याद्भानेन, तत्र सप्तमीविधानस्य वैयर्थ्यापादनेन दूषयति। स्वमतेन च 'यस्य च भावेन भावलक्षणम्' इत्यनेन अगतार्थत्वम्, अस्यावश्यकत्वं च समर्थयति।

तत्र तत्र वैयाकरणनव्या नव्यवैयाकरणा इति नाम्ना निर्दिशन् भट्टोजिदीक्षितप्रभृतीनां मतान्यनूद्य च निराकरोति, ५९, ७७, १०२, १०६, ११०, ११६, १२९, १४१, १५० एतेषु पृष्ठेषु, वृत्तिकारञ्च निरस्यति। इदञ्च नापरोक्षं मनोरमा–तत्त्वबोधिनी-काशिकाग्रन्थपरिशीलिनाम्। एतत्सर्वम् तत्र तत्राधस्तात् टिप्पण्यां स्थलविशेषनिर्देशेनासूचि। क्वचित् युक्तियुक्तमर्थमभ्युपैति, युक्त्यपेतञ्च निराकरोति। इति हरदत्तादय इति १२१, १५० १६९ पृष्ठेषु तन्नाम निर्दिशन्, तदुक्तमेवार्थं स्वहस्तयति, तस्य हरदत्ते महान् समादरः दृश्यते, अत एव तन्मतं भूषयति।

अत्र नवीनतार्किका इत्यादिना पृष्ठसंख्या ८, ८२, १११, १२८, १४१, १४९, १५७, एतेषु पृष्ठेषु तार्किकानां मतमनूद्य निरस्यति, तत्र स्वाभिमतमर्थमुपवर्णयति, एवमनुगमरसिकाः, साम्प्रदायिका इत्यादि, सर्वदर्शनानुयायिनः इति च वदन् सर्वेषां मतान्यनुकूलान्यात्मसात्करोति, प्रतिकूलानि निराकरोति।

## रहस्ये कौस्तुभस्य निर्देशः

अयमाचार्यो विध्यर्थम्, आख्यातार्थम्, धात्वर्थम्, विभक्त्यर्थञ्च निरूपयन् अस्य विस्तरः कौस्तुभे द्रष्टव्यः, कौस्तुभे व्यक्तमिति जैमिनिसूत्रार्थविवरणरूपं स्वोपज्ञं कौस्तुभं तत्र तत्र प्रमाणयति, अस्माभिश्च तत्तदर्थस्य मूले उक्तस्य ज्ञानाय कौस्तुभसन्दर्भोऽपि तत्र तत्र टिप्पण्यां समुदधारि जिज्ञासूनाम् सुखावगतये। एवं स्वविरचितां भाट्टदीपिकामपि निर्दिशति प्रथमाप्रयोजकत्वनिरूपणावसरे, अत्र शाब्दबोधे उपयुक्ता विचाराः सर्वेऽपि संकलिताः, तार्किकसम्मतः प्रथमान्तार्थमुख्यविशेष्यकशाब्दबोधः सोपपत्तिकं निराकारि।

## न्यायसुधाया उपन्यासः

न्यायसुधाकारञ्च लिङर्थनिरूपणावसरे स्वावलम्बं मनुते, ब्रवीति च सुधाकृदुक्तमेव कथञ्चित् युक्तमिति। आख्यातार्थविचारप्रसङ्गे व्यापार-

---

सामान्यं आख्यातवाच्यं इति पार्थसारथिमिश्रस्य मतं निराकृत्य, आख्यातवाच्यः प्रयत्न इति न्यायसुधाकृदभिप्रेतमेव मतं लाघवादभ्युपगच्छति, समर्थयति च। अस्माभिश्च ६१, ६१ पृष्ठयोः न्यायसुधाया उद्धरणेन, तदेव मतमाचार्यस्य सम्मतमिति प्रतिपादितमिति।

## सुधाकृदिति पद्यांशस्योक्तार्थे तात्पर्यम्

एवं ग्रन्थान्ते 'सुधाकृन्मीमांसामतकुमुदपूरस्य जयतु इति उपान्तिमस्य, अन्तिमस्य वा पद्यस्य तुरीयचरणे न्यायसुधाकारस्योल्लेखोऽस्माभिः १७२ पृष्ठ टिप्पण्यां विवृतोऽस्ति, सुधाकृत-न्यायसुधाकारः भट्टसोमेश्वरः। चन्द्रश्च पक्षे इति। अत्र न्यायसुधाया:राणकापरपर्यायायाः परिशीलनेनेदमगवम्यते—यत् तत्रत्याः पङ्क्तयः पदशः वाक्यशश्च ग्रन्थे उपन्यस्ताः। कलेवरगौरवभिया तान्यत्र नोल्लिख्यन्ते, परन्तु वस्तुतत्त्वविवेचनावसरे युक्त्यपेतं तन्मतमपि निरस्यत्येव, अतोऽयम् ग्रन्थकारः भाट्टमीमांसकमतेन शाब्दबोधविचारपरं प्रबन्धराजग्रन्थं निर्माय कौमारिलमतं प्राचीकशत्। अतः सकलमेव विद्वत्कुलमस्याधमर्णमित्यत्र नास्ति संदेहलेश इति।

## तत्प्रणीता ग्रन्थाः, तेषां पौर्वापर्यञ्च

अयं खण्डदेवाचार्यः नव्यन्यायपद्धत्त्या मीमांसाशास्त्रस्य परिष्करणे प्रथमं स्थानमधिकरोति, तत्र तद्विरचिताः ग्रन्था अस्माभिरुपलब्धा अध्ययनाध्यापनसम्प्रदाये प्रचलिताः-भाट्टमीमांसाकौस्तुभः, भाट्टदीपिका, भाट्टतन्त्ररहस्यञ्चेति इमे त्रय एव ग्रन्थाः। एतेषु च त्रिषु ग्रन्थेषु भाट्टकौस्तुभो नाम ग्रन्थः जैमिनिप्रणीतस्य दुरूहतमबहुविचारगर्भः पूर्वमीमांसादर्शनस्य विस्तृतव्याख्यानरूपः प्रथमाध्यायद्वितीयपादमारम्य [ अर्थवादपादप्रभृति ] तृतीयाध्यायबलाबलाधिकरणसमाप्तिपर्यन्तः। अत्र प्रमाणं शंभुभट्टवचनम्—'बलाबलाधिकरणसमाप्तिपर्यन्तं स्वकृतेन कौस्तुभग्रन्थेन व्याख्यातार्थां भाट्टदीपिका' इति। तत्र द्वादशसु अध्यायेषु विचारणीयानामर्थानामावापोद्वापाभ्यां विचार्य व्यवस्थापनं कृतम्। यथाऽत्र कौस्तुभे विषयविवेचनशैली दृश्यते, न तथा अन्यत्र वर्तत इति, सर्वतो नवीनोऽप्ययं कौस्तुभः सर्वैः समादरणीय एव शास्त्रार्थविनोदरसिकैः।

तथा चाचार्यो रूपकालंकारेण प्रशंसन् स्वप्रणीतं कौस्तुभमणिं भगवतः श्रीकृष्णस्योपहरति।

यथा—

'मीमांसाम्बुनिधिं प्रमथ्य सुदृढैर्न्यायोच्चयैर्निर्जरैः<br>
कृत्वा जैमिनिसूत्रमन्दरममुं वेदं तथा वासुकिम्।<br>
यद्धालाहलसंज्ञमेव कलितं ग्रन्थान्तरं सज्जनैः<br>
श्रीकृष्णस्य तु भूषणाय स परं यः कौस्तुभाख्यो मणिः'॥कौ०पृ०३०१इति।

## भाट्टदीपिकायाः परिचयः

द्वितीयस्तु भाट्टदीपिका। अयमपि ग्रन्थः प्रथमाध्यायद्वितीयपादमारभ्य द्वादशाध्यायपर्यन्तोऽष्टादशसहस्रग्रन्थात्मकः। तत्र सूत्र-भाष्य-वार्तिक-शास्त्रदीपिका-तिलक-विधिरसायनप्रभृतिषु उक्ता अर्थाः सोपपत्तिकं तथैवाहृताः, समर्थिताश्च। निर्युक्तिकाश्च निराकृताः। सूत्र-भाष्य-वार्तिकादीनां विषये भाट्टदीपिकावलम्बनेन यदि तुलनात्मकमनुसन्धानं क्रियते, तर्हि महान् प्रबन्धः भवेदिति भिया, नात्र लेखनीं व्यापारयामः। अत्र भाट्टदीपिकायां शब्दप्रयोगविषयेऽत्यन्तं कार्पण्यमाश्रितमिति सुविदितमेवेदं समेषां विदुषाम्। इदञ्च कार्पण्यमाचार्यैर्ग्रन्थस्य परिसमाप्त्यर्थमेव समाद्रियते स्म, न तु आजानतः। भाट्टदीपिकाया आदिमं पद्यम्—

'विश्वेश्वरं नमस्कृत्य खण्डदेवस्सतां मुदे।
तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकाम्'॥ इति।

अत्र विश्वेश्वरपदं श्लेषेण विश्वेश्वरम्—काशीपुराधीश्वरम्, विद्यागुरुम् गागाभट्टञ्च बोधयति, ईश्वररूपं गुरुं नमस्कृत्येति तदर्थः। अत्र ग्रन्थे नव्यन्यायशैल्या पदार्थाः परिष्कृता इति नापरोक्षमिदं तद्ग्रन्थाध्ययनशीलानामिति। अस्य ग्रन्थस्य भाट्टतन्त्ररहस्ये प्रथमायाः प्रयोजकं किम्? इति निरूपणावसरे उक्तं ग्रन्थकृता यत्कारकमित्यादि तत्त्वमिति भाट्टदीपिकायामि पृ० सं० ४१ ति।

काञ्चीसंस्करणभूमिका पद्यमिदमुदाहरति

यथा—

'इतः प्राञ्चोऽखिला ग्रन्था न्यूनतादोषदूषिताः।
इयमेकैव पूर्णाऽभूत् शास्त्रेऽस्मिन् भाट्टदीपिका'॥ इति।

अत्र अभूदिति, शास्त्रेऽस्मिन्निति च पदद्वयेन स्वप्रणीतेषु मीमांसाग्रन्थेषु भाट्टदीपिकाभिन्नस्य ग्रन्थस्याऽपूर्णत्वं गम्यते, तथापि एतत्प्रणीतानां शास्त्रान्तरग्रन्थानामद्यावधि अनुपलम्भात्, एतद्विषयकमेव इदं पद्यमिति निश्चीयते इति भूमिका वदति।

अत्र वयं ब्रूमः—ग्रन्थकर्ता आचार्यखण्डदेवो भाट्टदीपिकाया असम्पूर्णताम् स स्वमेवाभिधत्ते। परमिदमत्र विचारणीयं पद्यमिदं महीसूरपुरे मुद्रितायाः भाट्टदीपिकाया आदौ, मध्ये, अन्ते वा नोपलभ्यते। किञ्च ग्रन्थादौ पूर्णोऽभूदिति भूतनिर्देशः कथं सङ्गच्छताम्, अन्त्ये भूतनिर्देशस्तु यथाकथञ्चिदुपपद्येत, स तु अन्ते नास्तीति पद्यमिदमन्येन केनचित् कृतं स्यात्, न तु आचार्यखण्डदेवेनेत्येव भवितुं युक्तमिति।

अपि च सङ्कर्षकाण्डव्याख्याता गम्भीररायदीक्षितस्यात्मजः शाक्तशिरोमणिः भास्कररायदीक्षितः सङ्कर्षकाण्डव्याख्यायामाद्यन्तरहिता दीपिकाऽऽसीत्। साम्प्रतं भाट्टचन्द्रिकया परिपूर्णतामगादिति।

तथा च—

'अद्यावाधि कृतिरेषाऽऽद्यन्तविहीनेति दीपिकाख्याऽऽसीत्।

षोडशकलाभिरधुना परिपूर्णा भाट्टचन्द्रिकात्वमगात्' ॥ इति पद्येन।

भाट्टचन्द्रिकाया आविर्भावात्पूर्वं भाट्टदीपिकाया आद्यन्तविहीनत्वमासीदिति प्रतीयते। तद्विरोधादप्युपर्युद्धृतं पद्यमनादरणीयमिति।

यद्यपि महीसूरपुरे मुद्रिता, महामहोपाध्यायबिरुदांकितैः श्रीरामसुब्बाशास्त्रिचरणैश्च संपादिता भाटटदीपिका प्रथमाध्यायप्रथमपादस्याप्युपलभ्यते। परमत्र निर्णयकारणं प्रभावलीतो नान्या समस्ति, अयमर्थः प्रभावल्या उपक्रमे एव विशदः—इति।

## तृतीयस्तु भाट्टतन्त्ररहस्याख्यः प्रकृतः प्रबन्धः

### ग्रन्थनामविचारः

तृतीयस्तु भाट्टतन्त्ररहस्यन्नाम प्रबन्धरत्नम्, यस्य प्रकृतं तृतीयम् संस्करणं प्रियपाठकमहाभागानां करकमलयोरुपह्रियते, अस्य ग्रन्थस्य नाम त्रेधोपलभ्यते—(१) रहस्यम्, (२) भाट्टरहस्यम् (३) भाट्टतन्त्ररहस्यमिति च। तत्राद्यम् काचित्कम्, यथा—रहस्ये'इति सुधानिधौ। तत्रत्यो ग्रन्थः चतुर्थीविचारप्रकरणे निर्दिष्टः। द्वितीयन्तु भाट्टरहस्यमिति प्रसिद्धं विद्वत्कुले, अत एव कविमण्डनः शम्भुभट्टः खण्डदेवान्तेवासी भाट्टरहस्ये पूज्यपादैरुक्तमिति प्र० पृ० ६-५०३ निर्दिशति। विज्ञेषु व्यवहारश्च ईदृशः, काञ्चीसंस्करणञ्च तेनैव नाम्ना निर्दिशति, परन्तु तृतीयन्नाम ग्रन्थकृता आचार्यखण्डदेवेनैव ग्रन्थोपक्रमे कृतमस्ति। यथा-'रहस्यं भाटटतन्त्रस्य विशदीकर्त्तुमीश्महे'—इति।

किञ्च सरस्वती भवनस्थे नं २९०४५ संख्यके हस्तलिखिते पुस्तके भाट्टतन्त्ररहस्यमिति नामोल्लिखितमुपर्युक्तमेवार्थं द्रढयति।

### स्पष्टप्रतिपत्त्यर्थमेव तेनैव नाम्नाऽत्र निर्देशः

तदीयं वचनं पुरस्कृत्यैव तृतीयमिदं संस्करणं तेनैव नाम्ना व्यपदिशति। भाट्टरहस्यमिति व्यवहरद्भिरपि तन्त्रशब्दयोजनेनैर्वार्थविवरणं कर्तव्यम्, तन्त्ररहस्यमिति तु धर्मपुराभिजनेन रामानुजाचार्येण प्रभाकरमतानुयायिना प्रणीते तन्त्ररहस्येऽतिप्रसक्तं भवेत्, तद्व्यावृत्तये भाट्टेतिविशेषणमवश्यमु

पादेयम्। तत्र भाट्टतन्त्ररहस्यस्यैव भाट्टरहस्यमिति व्यवहारः प्रवर्तितो विद्वद्भिः लाघविकैः।

यथा अग्निष्टोमसंस्थाकस्य ज्योतिष्टोमस्याग्निष्टोम इति व्यवहारो भवति-ज्योतिष्टोमे श्रूयेत, अग्निष्टोम इति, परन्तु वक्तव्यमिदमेव अग्निष्टोमसंस्थाको ज्योतिष्टोम इति व्यवहारो भवति, एवमेव भाट्टतन्त्र-रहस्यमित्येव इदं पदं भव्यमर्थं लभते। तस्मादिदं संस्करणं स्पष्टप्रति-पत्तिमेव मुख्यप्रयोजनमभिसन्दधानं सत् तेनैव नाम्ना व्यवहरति, अत्र प्रमाणन्तु ग्रन्थकारस्य प्रतिज्ञावाक्यमुपरि उद्धृतमेवेति। तत्र च प्रतिपाद्य-विषयाः पूर्वमेव निरदेशि। शाब्दबोधविचारो भाट्टमीमांकानामभिमतः तेषाम् सर्वस्वभूता भावना शाब्दबोवे मुख्यविशेष्यतया भासत इति, अत्र समर्थिता। सा च धात्वर्थादतिरिच्यते तार्किकादिशैल्या बहुतरन्यायातिदेशादिना पूर्वोत्तर-पक्षयोर्व्यवस्थापनं कृतम्, तेनावगम्यते मोमांसादर्शनमूर्त्तिस्वरूप एवाचार्य-खण्डदेवः-इति। भावार्थाधिकरणादौ समर्थिताया प्राधान्येन प्रतिपादनाय भाट्ट-तन्त्ररहस्यस्य प्रवृत्तिः। यद्वद्धनानामित्यन्तिमं पद्यं क्वचित्कोशे न दृश्यते।

तत्र शाब्दबोधविचारमुखेन मीमांसकानां सर्वस्वभूता भावना यत्र विवेचिता, सा च धात्वर्थातिरिक्ता वाक्यार्थे मुख्यविशेष्यभूता—इति।
यामधिकृत्य विश्वेश्वरभट्टो ब्रवीति—

यागाद्यसत्त्वमचिरस्थितिकञ्च यस्याः<br>
सम्बन्धतः फलभुवः फलदायि जातम्।<br>
दध्यादिसत्त्वमपि यत्करणत्वतोऽतः<br>
सा भावना रघुपतेः पदयोर्मम स्यात्'॥ भा. चि. पृ. ७० इति।

## अस्य वाक्यार्थवर्णनप्रसंगे प्रभावल्यादावनुसरणम्

अस्य ग्रन्थस्य प्रभावल्यां तत्र तत्र शाब्दबोधविचारप्रसंगे महता आदरेणोल्लेखो दृश्यते। अर्थसंग्रहव्याख्यानेऽपि धर्मलक्षणप्रतिपादनावसरे अस्य निर्देशः कृतोऽस्ति, एवं सिद्धान्तसुधानिधौ अस्य निर्देश उपलभ्यते, पदवाक्यरत्नाकरेऽपि गोकुलनाथोपाध्यायो क्रियाविशेषणानां कर्मत्वम् आचार्यखण्डदेवोक्तमेवादरेण गृह्णाति, तच्छिष्योपि गिरिधरोपाध्यायोऽप्यनुसर-तीति प्रागवादिष्म, अतो बहुभिः प्रामाणिकैस्तत्र तत्र निर्देशेन अस्य सर्वशास्त्रो-पकारकत्वं निसर्गसिद्धमेव-इति

## ग्रन्थकर्तुः परिचयः

श्रीमान् आचार्यः खण्डदेवो नव्यमीमांसकानां मूर्धन्यः कौस्तुभे आत्मानम्

रुद्रदेवसूनुं कीर्तयति। कौस्तुभे, भाट्टदीपिकायाञ्च तालिकासु रुद्रदेवस्य सूनुरिति कीर्तनादस्य पिता सर्वतन्त्रस्वतंत्र आचार्यरुद्रदेव इति स्फुटम् तदीयवचनैरेवावगम्यते।

यथा—

'शश्वत्बोधतरङ्गा विद्यागङ्गोत्तमाङ्गके यस्य।
श्रीरुद्रदेवसंज्ञं जनकं वन्दे सदा स्फूर्त्यै॥ मी० को० प्र० अ० पृ० १ इति,

'श्रीरुद्रदेवसूनोः कृतिरेषा खण्डदेवस्य'।

'इति श्रीमत्पूर्वोत्तरमीमांसापारावारपारीणश्रीरुद्रदेवसूनुखण्डदेवविरचिते मीमांसाकौस्तुभे द्वितीयाध्यायस्य द्वितीयः पादः'—इति च।

अनेन भाट्टदीपिकाया अन्ते इदमुक्तम्—

'जैमिनेर्विमलसूक्तिषु मग्नम्
शुद्धिमाप विमलं मम चेतः।
प्रीतिमेतु नृहरेः पदपद्मे
येन जन्मनिवहो न पुनः स्यात्'॥ इति।

अनेन शास्त्रान्तरेष्वपि श्रुतितात्पर्यचन्द्रिकादयो ग्रन्थाः प्रणीता इति प्रभावलीविमर्शनेनावगम्यते प्र० पृ० ४१४। परं ते ग्रन्था अद्यापि नोपलभ्यन्ते।

### श्रीमदाचार्यखण्डदेवस्य समयः सी० ए० डी० १५७५-१६६५।

अयमाचार्यो देवकुलोत्पन्नो दक्षिणात्यः, अस्य जीवनकालो वैक्रमी सप्तदशाब्दी, निर्याणकालश्च १७२३ परिमितो वैक्रमो वत्सरः। तदुपष्टम्भके द्वे प्रमाणे। तत्राद्यं यथा—वाराणस्यां चित्पावनाख्यदाक्षिणात्यब्राह्मणानाम्, अन्येषां च परस्परं कश्चन विवादः समजनि। तच्छमनार्थं १७१४ वैक्रमे हेमलम्बवत्सरे मुक्तिमण्डपे पण्डितानां महती काचन सभा सम्मिलिता। तत्र व्यवस्था काचन लिखिता, यस्याः प्रतिलिपिर्नीचैरुद्ध्रियते।

यथा—"मुक्तिमण्डपातील निर्णय शक १५७९, सन् १६५७

### श्रीविश्वेश्वरो विजयतेतराम्

श्रीः॥ श्रीः॥ अथ देवर्षिविप्राणां काश्यां श्रीमुक्तिमण्डपे।
यतिमिश्रविपश्चिद्भिस्सद्ब्राह्मण्यं विविच्यते॥ १॥

तत्र तावत् पूज्यपादपरमहंसपरिव्राजकमहाराष्ट्र-कर्णाटक-कोंकण-तैलङ्ग-द्राविडादिसकलज्ञातीयविद्वद्गृहस्थनिचयसम्मत्या वेद-शास्त्र-लोकतो विमृश्य,

देवर्षिब्राह्मणा वेद-शास्त्र-पुराणेभ्योऽधिगतपरमार्थाः क्रतुयजनयाजनादिसदाचार-शीलाः पङ्क्तिपावनाश्शरीरान्वयार्हा अत्युत्तमब्राह्मण्यशालिनः शिष्टानुष्ठित-शरीरान्वयाश्चेति सिद्धान्तितम्। दृष्टं चैतत्—

भट्टमीमांसकश्रीभट्टरघुनाथाख्यसूरिभिः ।
मणिकर्णीत्युपाख्यस्यान्नंभट्टस्य कन्यका ॥
देवर्षेः प्रसमुद्वाह्य वाजपेययजिः कृता ।
भूयांसश्च दृशा अन्ये तद्वंशीया वयं च ते ॥
ब्रुवाणा दोषमत्रार्थे विद्वद्भिः परिशोधिते ।
विश्वेशद्रोहिणो ब्रह्मघातिनश्च भवन्ति ते ॥ इति दिक् ॥

लिखितञ्चैतन्मीमांसकभट्टलक्ष्मणेन विद्वदनुज्ञातेन। संवति कृतक-गाब्ज १७१४ सम्मितौ नन्दशैलशरभ १५७९ मितशाके ( =१६५७ A. D. ) हेमलम्बशरदि समपत्रं (?) ज्ञायते सकलभूसुरवृन्दैः"। इति। व्यवस्था-पत्रेऽस्मिन् तदानीन्तनानां वाराणसेयानां सर्वेषां पण्डितानां हस्ताक्षराणि गृहीतानि। तन्मध्ये श्रीमतां खण्डदेवमहोदयानामपि हस्ताक्षराणि विलसन्ति। इदं पत्रं काशिकसरस्वतीभवने सुरक्षितमस्ति, अतस्तत्कालजीविन इमे इति निश्चयचम्।

द्वितीयं यथा—आचार्यो रसगंगाधरकर्तुः पण्डितजगन्नाथस्य पितुः पेरु-भट्टस्य पूर्वमीमांसागुरुरासीदित्यवगम्यते।
यथा—

'श्रीमज्ज्ञानेन्द्रभिक्षोरधिगतसकलब्रह्मविद्याप्रपञ्चः
काणादीराक्षपादीरपि महितगिरो यो महेन्द्राददेवीत्।
देवादेवाध्यगीष्ट स्मरहरनगरे शासनं जैमिनीयम्
शेषाङ्कप्राप्तशेषामलभणितिरभूत्सर्वविद्याधरो यः ॥

पाषाणादपि पीयूषं स्यन्दते यस्य लीलया।
तं वन्दे पेरुभट्टाख्यं लक्ष्मीकान्तं महागुरुम्' ॥ इति।

इदञ्च पद्यं रसगंगाधरव्याख्यात्रा शाब्दिकशिरोमणिना नागेशभट्टेन देवादेवेति पदमित्थं व्याख्यातम्, अत्र एवशब्दः प्रसिद्धौ, देवात्-खण्डदेवा-देवेत्यर्थः। एतेन पण्डितराजस्य जगन्नाथस्य कालिक इत्यवगम्यते, पण्डित-राजश्च राजसिंहासनमधिरूढस्य षाजहाननृपस्य सभां मण्डयति स्म इति, ऐतिह्यविद आचक्षते।

## तर्कालंकारानन्तरकालिकत्वम्

अपि च कौस्तुभे आकृत्यधिकरणसिद्धान्ते जातिशक्तिवादे घटत्वस्य-

जातेः स्वरूपेण प्रकारत्वस्य नैयायिकैरपि स्वीकारात्, न च जातेः समवायेन स्वरूपेणैव प्रकारता, न सम्बन्धान्तरेणेत्यत्र प्रमाणमस्ति, परैरपि तथाऽनभ्युपगमात्। अत एव अनुभवत्त्वान्येत्यादिर्दीधितिफक्किका उद्धृता।

यथा—यां काञ्चिदनुमितिव्यक्तिमादाय तद्व्यक्तिसमवेतानुभवत्वान्यानुभवान्यासमवेतधर्मसमवायित्वमिति अनुमितेः दीधितिकारैर्लक्षणमुक्तम्।

अत्र जगदीशतर्कालंकारः पूर्वोक्तसन्दर्भस्य आशयमित्थं वर्णयामास-अनुभवत्वमादाय प्रत्यक्षाद्यतिव्याप्तेर्वारणाय अनुभवत्वान्येति, यद्यपि अनुभवत्वप्रतियोगिकभेदस्यानुभवत्वेऽपि सत्त्वात् उक्तदोषतादवस्थ्यम्, तथापि अनुभवत्वत्वावच्छिन्नप्रतियोगिताकभेदस्य उक्तौ तद्घटकीभूतं यत् सकलानुभववृत्तित्वम्, तदवच्छिन्नभेदस्यैव सम्यक्त्वे ज्ञानत्वादिवारकस्यानुभवान्यासमवेतत्वस्य वैयर्थ्यम्, तथापि अनुभूतिरित्याकारकयत्किञ्चित्बुद्धिप्रकारत्वावच्छिन्नभेदस्य अनुभवत्वान्यपदेन उक्तत्वाददोषः, सकलानुभववृत्तित्वस्य तत्राप्रविष्टत्वादिति जागदीश्या अभिप्रायमाचक्षाणस्तदनन्तरमात्मानं स्थापयति।

अपि च अप्पय्यदीक्षितेन्द्रान् आग्नेयाधिकरणे—मीमांसकमूर्धन्येन विधिरसायनकृता इति वदन् ततोऽर्वाचीन इत्यपि प्रतीयते।

## सरस्वतीभ्यः प्राचीनः

एवम्—मधुसूदनसरस्वतीभिः गूढार्थदीपिकायां शाब्दीभावनानायाः करणेतिकर्तव्यतांशयोः व्यवहारमात्रम्, न तु शाब्दबोधे भानमिति, आचार्यपक्षम् निरस्य, भट्टवार्तिकोपन्यासेन तयोः शाब्दत्वं व्यवस्थापितम्। इदञ्चास्माभिः टिप्पण्यां पृ० २७ सूचितम्, अतो मधुसूदनसरस्वतीभ्योऽयमाचार्यः प्राचीनः अवगम्यते।

एवम्—सोमनाथदीक्षितोऽपि शास्त्रदीपिकाव्याख्याता क्रत्वर्थपुरुषार्थत्वलक्षणविचारप्रसंगे शास्त्रदीपिकायामुक्तं इतिकर्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्वमिति लक्षणं भाट्टदीपिकायामाचार्ये अदूदुषदतिव्याप्तिदूषणेन, तद्दूषणमुद्धरति मयूखमालिकायाम्। यथा—तत्तच्छास्त्रानपेक्षेच्छाविषयभाव्यकभावनांशत्वे सति क्रत्वर्थभिन्नत्वं पुरुषार्थलक्षणं विवक्षितमिति, नाधानाध्ययनयोरतिप्रसंगः इति, शा० दी० पृ० ३४७।

एवम्—कपिञ्जलाधिकरणे भाट्टदीपिकाकारेण 'कपिञ्जलानालभेत' इति उदाहरणं परित्यज्य, 'चतुरो ब्राह्मणान् भोजयेत्' इति वाक्यमुदाहृत्य विचारितम्, तस्यायमाशयः-अधिकालम्भे प्रत्यवायः स्यादिति, तं दोष-

मुद्धरन् सोमनाथदीक्षितः 'कपिञ्जलानां पर्यग्निकृतोत्सर्गान्न हिंसाप्रसक्तिः, तथापि यत्र न पर्यग्निकृतोत्सर्गः, तदभिप्रायेण इदमुदाहरणं बोध्यमिति वदन् प्राचीनोक्तमेवोदाहरणं समर्थयति, आचार्योदाहृतस्य निरासञ्च मेने शा० दी० पृ० ८००। अत एवमादिभिः सोमनाथदीक्षितात् खण्डदेवाचार्यः प्राचीनः—इति। अतोऽस्य समयः षोडशशताब्दीति यावद्बलवद्बाधकोपनिपातम्।

## सूत्रव्याख्यानविषयेऽस्य स्वातन्त्र्यम्

सूत्राणां विषये खण्डदेवेन स्वतन्त्रा व्याख्या कृता दृश्यते। तत् दिङ्मात्रेण अत्र प्रदर्श्यते।

१—सूत्राणि च सुधीभिरस्मिन्नेवार्थे व्याख्येयानि, न तु स्वरूतपत्तेः न प्रयोजक इति भाष्यकारोक्तेऽर्थे, मी० द० ४२१।

२—पञ्चसञ्चरेषु इत्यधिकरणे सूत्रकार-भाष्यकारयोर्मतभेदमभिधाय, भाष्यमनादृत्य सूत्रमेवं व्याख्येयमित्युपक्रम्य अग्निमन्थनादिवाक्यानामौचित्येन अतिदेशविधिस्तुत्यर्थत्वात्, नेतरार्थत्वात् इति सूत्रं विधायकातिरिक्तस्तावकत्वरूपप्रयोजनकथनार्थम्, तदेवं अतिदेशवाक्यस्याङ्गविधिपरत्वे लिङ्गमिति लिङ्गदर्शनसूत्रस्यार्थः, मी० द० ७१२। इति।

३—वस्तुतस्तु यूपकार्ये खलेवालीत्वविधानात्, यूपशब्दस्य न संस्कारशक्तत्वम्, संस्कारातिदेशस्तु स्थानापत्त्या इति सूत्रोक्तयूपदृष्टान्तोऽपि असङ्गतः एव। मी० द० ७३९।

४—सूत्राण्यपि अस्मिन्नर्थे योजनीयानि! मी० द० १०-८-१०।

५—सूत्रभाष्ययोरपि स्वाहाकारवषट्कारयोर्व्यवस्थितविकल्पः इत्यस्मिन्नर्थे योजना सुधीभिरिहोन्नेया मी० द० १११३।

एवमेव भाष्यस्य अष्टाविंशतिस्थलेषु, वार्तिकस्य च द्वात्रिंशतस्थलेषु तत्तन्मतमुपेक्ष्य स्वतन्त्रा व्याख्याऽनेनाचार्येण प्रवर्तिता—इति, गौरवभिया नेह प्रतन्यते।

अपि चास्यान्तेवासी प्रभावल्या अन्ते इत्थं निर्दिशति खण्डदेवाचार्यः संन्यासाश्रमं गृहीत्वा श्रीधरेन्द्र इत्याख्यां लेभे। अन्ते च १७२२ ज्येष्ठ मासि हस्तर्क्षे बृहस्पतिवासरे प्रभाते काश्यां ब्रह्मनाले ब्रह्मसायुज्यं प्राप-इति।

यथा—

'यः खण्डदेवनामा सन् श्रीधरेन्द्राभिधां गतः।
स गुरुर्मे विजानातु टीकाकृतिपरिश्रमम्॥

वर्षे नेत्रद्विसप्तद्विजपतिगणिते मासि ज्येष्ठे करर्क्षे
वारे जैवे प्रभाते सकलपितृतिथौ प्राष्ठपद्याः परस्य ।
काश्यां श्रीब्रह्मनाले निरुपमचरितः खण्डदेवाभिधानः
प्राप्तः श्रीब्रह्मभावं विबुधवरगुरुः श्रीधरेन्द्रो यतीन्द्रः' ।। इति,

## अस्य ग्रन्थस्य प्रकृतं संस्करणम्

इदञ्च तृतीयं संस्करणं प्रियपाठकानां करकमलयोः समर्प्यते, अस्य प्रबन्धरत्नस्य सुखावगतये जिज्ञासूनाम्, छात्राणाञ्चोपकाराय विषमग्रन्थि-भेदिनी नाम टिप्पणी योजितास्ति, अत इदं संस्करणं भाट्टतन्त्ररहस्यस्य महते उपकाराय प्रकल्प्येत, विशिष्टा भूमिका आँग्लभाषया निबद्धा, तथा संस्कृत-भूमिका च तार्किक-शाब्दिकमतसाधकबाधकयुक्तिभिः परिकर्मिता, विषयानु-क्रमणिका, शाब्दबोधोपयोगिविचारसारिणी, द्वित्रेषु स्थलेषु तार्किक-शाब्दिक-मीमांसकानामभिमताः शाब्दबोधप्रकाराः सन्निवेशिताः सन्ति, येन कस्य मते कीदृशः शाब्दबोधः इत्यादि सुज्ञानं भवेत्, शंका-समाधानाभ्यां भावना-वाक्यार्थपक्षस्संगृहीतः रहस्यकृता विवेचितानां तत्तदभिमतानां विध्यर्थवि-शेषाणामुपन्यासोऽपि सारिण्या योजितोऽस्ति, अतोऽनेन जिज्ञासूनां मनस्तोषो भवेदिति विश्वस्यते ।

## कृतज्ञताप्रकाशनम्

अस्य सम्पादने, आगर्भसन्धि आनिर्वहणसन्धि च अस्य ग्रन्थस्य संशोधने तत्र तत्र वाक्यानामर्थविवरणे साहाय्यमाचरितवद्भ्यो वाराणसेय-संस्कृतविश्वविद्यालये यू० जी० सी० प्रोफेसरपदमलङ्कुर्वाणेभ्यः सुब्रह्मण्यशास्त्रि-वर्येभ्यः किञ्चित्कर्तुमनीशाना वयं कार्त्तज्ञ्यं केवलमाबिभर्मः ।

मत्सहयोगिभ्यः पण्डितप्रवरमध्वाचार्येभ्यः मीमांसा-वेदान्ताचार्येभ्यः आशिषः वयं समर्पयामः, यैः स्वकर्मनिरतैरनेकग्रन्थसम्पादने व्यापृतैर्महता श्रमेण अस्य ग्रन्थस्य प्रतिलिपीकरणे, प्रूफसंशोधने, भूमिकादिलेखने च महानुपकारो व्यधायि ।

श्रीमान् मदन्तेवासी रामप्रकाशशास्त्री मीमांसाचार्यः एम्० ए० पदवीकः ( रामपूर डिग्री ) विद्यालये व्याख्याता अस्य ग्रन्थस्य समग्रस्य प्रतिलिपीकरणेन महत्साहाय्यमाचचार, अतस्तस्य सर्वदा सर्वत्र सर्वथा समुन्नतिं कर्तुं करुणा-वरुणालयं काशीपुराधीश्वरमन्नपूर्णाविशालाक्षीजनिमभ्यर्थये, एतमीप्सतार्थेन योजयतु भगवानिति ।

## अस्य प्रसाधने सामग्री

अस्य ग्रन्थस्य सम्पादने कोशपञ्चकं साधनमासीत्। तत्र आद्यं द्वयम् प्रयागस्थस्वर्गीयगंगानाथझा इँस्टीच्यूटतः सौहार्देनावलोकनाय प्राप्तम्, तत्राद्यमसम्पूर्णम्, द्वितीयन्तु सम्पूर्णं, प्रथमपरिच्छेदान्तम्, तृतीयन्तु वारणसेय सं० विश्वविद्यलयीयसरस्वतीभवनस्थम्, चतुर्थञ्च अस्माभिरध्ययनकाल एव पूज्यपादानां पुस्तकेन संशोधितम्, पञ्चमञ्च पण्डितराज श्रीयुत सुब्रह्मण्यशास्त्रिणाम्, यत्राद्यं चत्वारिंशत् पृष्ठात्मकं द्वितीयञ्च समग्र शुद्धम्, महामहोपाध्यायचिन्नधरमिश्रैर्मिथिलामण्डलमण्डनायमानैः संशोधितञ्चास्मिन् संस्करणे अत्यन्तमुपकाराय कल्पते स्म, पण्डितराजानां पुस्तके त्रुटितानामंशानां पूरणमायततेस्म, अतो लब्धैरेतैः साधनैर्यथामति ग्रन्थस्य प्रसाधने पूज्यपादानां कृपया च वयं समर्था अभूम। एवं महता प्रणिधानेन संशोधितेप्यस्मिन् संस्करणे दृष्टिदोषेण, प्रमादेन शीशकाक्षरसंयोजकस्यानवधानाद्वा सम्भूतानामशुद्धीनां गुणगृह्याः विपश्चितः संशोधनेन ग्रन्थमिमम् परिशीलयन्तु, मीमांसकसम्मतं शाब्दबोधरसमास्वादयन्तु दयालवस्साधवः विद्वांस इति साञ्जलिबन्धं सप्रश्रयञ्च भूयो भूय आवेदयते।

सिद्धान्तरीतिषु मया भ्रमदूषितेन<br>
स्यादन्यथाऽपि लिखितं यदि किञ्चदस्य।<br>
संशोधने सहृदयास्सदया भवन्तु<br>
सत्संप्रदायपरिशीलननिर्विशंकाः ॥

'कुतो वा नूतनं वस्तु वयमुत्पेक्षितुं क्षमाः।<br>
वचोविन्यासवैचित्र्यमात्रमत्रानुभूयताम् ॥<br>
यदत्र गर्हणीयं स्यान्मदीयं तत्कुकल्पनम्।<br>
युक्तियुक्तं प्रशस्यञ्चेत् गुरुभिर्भाषितन्तु तत्' ॥ इति।

विदुषामाश्रवः<br>
महामहोपाध्याय चिन्नस्वामिशास्त्रिचरणानाम्<br>
शिष्यः मीमांसारत्नम्–अ० सुब्रह्मण्यशास्त्री<br>
कपालतडागपुराभिजनः<br>
धर्मशास्त्र-मीमांसाविभागशीर्षण्यः<br>
प्राच्यविद्या तथा धर्मविज्ञान संकाय<br>
का० हि० वि० वि०<br>
वाराणसी–५

श्रीवैशाखशुक्लपञ्चमी<br>
२०२७ सम्वत्<br>
१०–५–७०

# भाट्टतन्त्ररहस्य-तट्टीकागतानां विषयाणामनुक्रमणिका

पृ० सं०

## प्रथमान्तार्थमुख्यविशेष्यत्वनिरासमुखेन भावनावादः

## प्रथमाप्रयोजकविचारः



## अथ कर्तृलक्षणावादः

## अथ धात्वर्थनिरूपणम्



## यागपदार्थनिर्वचनम्



## अथाख्यातार्थनिरूपणम्

## भावनायाः प्रधान्योपसंहारः



## धात्वर्थस्य कर्मत्वेनान्वयस्थलानि

## द्वितीयाविभक्त्यर्थविचारः



## कर्मणिप्रयोगे शाब्दबोधप्रकारः

## अथ तृतीयाविभक्त्यर्थनिरूपणम्

## अथ चतुर्थीविभक्त्यर्थनिरूपणम्

## अथ पंचमीविभक्त्यर्थनिरूपणम्



## अथ षष्ठीविभक्त्यर्थनिरूपणम्

## अथ सप्तमीविभक्त्यर्थनिरूपणम्

इति भाट्टतन्त्ररहस्यतट्टीकयोर्विषयानुक्रमणिका समाप्ता

श्रीमत्पूर्वोत्तरमीमांसापारावारपारीणश्रीमदाचार्यखण्डदेवविरचितम्

# भाट्टतन्त्ररहस्यम्

विषमग्रन्थिभेदिनीनामकटिप्पणीसहितम्

मंगलाचरणम्

[1]स्मृत्वा स्मृत्वा [2]मुरारातिं [3]तत्प्रसादावलम्बनात् ।
रहस्यं भट्टतन्त्रस्य विशदीकर्तुमीश्महे ॥ १ ॥

कर्तव्यार्थप्रतिज्ञा

[4]यज्ज्ञानाज्जैमिनीयोक्तिः [5]स्फुटीभवति तत्त्वतः ।
तद्रहस्यं खण्डदेवः प्रकाशयितुमुद्यतः ॥ २ ॥

---

## विषमग्रन्थिभेदिनी

काण्डद्वयोपपाद्याय कर्म-ब्रह्मस्वरूपिणे ।
स्वर्गापवर्गरूपाय यज्ञेशाय नमो नमः ॥
खण्डदेवकृतिः क्वेयं क्वेयं मामिका मतिः ।
अथापि पूज्यपादानां करुणामयवर्ष्मणाम् ॥
कटाक्षलेशमाश्रित्य चापलादेव केवलम् ।
रहस्ये टिप्पणीं कुर्वे विषमग्रन्थिभेदिनीम् ॥

१—मीमांसकमते विध्यर्थाख्यातार्थधात्वर्थविभक्त्यर्थनिरूपणपूर्वकं भावनावाक्यार्थ-निर्णायकं भाट्टतन्त्ररहस्यनामकं प्रकरणमारभमाणः खण्डदेवाचार्यो भगवन्नतिरूपं मङ्गलमाचरति—"स्मृत्वेति ।

२—पुरारातिं इत्यपि पाठः ।

३—तत्कटाक्षेति पाठः ।

४—चिकीर्षितार्थं प्रतिजानीते—"यदिति" । मीमांसाशास्त्रे लक्षणशब्दः प्रमाणा-ध्याययोर्दृष्टः 'चोदनालक्षणोऽर्थो धर्मः, अथातः शेषलक्षणमि'त्यादौ । तेन द्वादशलक्षणी—द्वादशाध्यायी तस्यां मीमांसायामित्यर्थः । तस्या विषयो धर्मोऽधर्मश्चेति ।

५—न्यायसाहस्रीति पाठान्तरम् ।

तत्र तावत् द्वादशलक्षण्यां धर्माधर्मावेव जैमिनिनाऽनुष्ठानोपयोगितया [१]विचारितौ। यद्यपि धर्माधर्मावदृष्टविशेषात्मकौ, न क्रियारूपौ। अत एव 'धर्मः क्षरति कीर्तनादि'त्यादौ, वैशेषिकतन्त्रे च क्रियाजन्यादृष्टे धर्माधर्मशब्दप्रयोगः, तथापि 'धर्मस्त्वनुष्ठितः पुंसां' इत्यादौ, तज्जनकविहित-निषिद्धक्रियायामपि धर्माधर्मशब्दप्रयोगात्, ताविह प्राधान्येन विचार्येते।

## धर्माधर्मलक्षणाक्षेपः

अथ किन्नाम धर्मत्वमधर्मत्वं वा। न तावद् विहितक्रियात्वम्, निषिद्धक्रियात्वं वा तत्। विहित–निषिद्धद्रव्यादौ तदनापत्तेः, न हि फलार्थगुणानुष्ठातृणाम्, यज्ञे रजताद्यनुष्ठातृणाञ्च 'धार्मिकः, अधार्मिकः' इति व्यवहाराभावः। तथात्वे—इन्द्रियकामाद्यधिकरणादौ शास्त्रसङ्गत्यनापत्तेश्च। तस्य धर्मत्वाभावे तज्जन्यादृष्टस्य धर्मत्वाभावेन कीर्तननाश्यत्वानापत्तेश्च। नापि क्रियात्वरहितं तत्; विवाहार्थानृतवचनादावभ्यनुज्ञाविधिविषये धर्मत्वापत्तेः, षोडशिग्रहणेऽधर्मत्वापत्तेश्चेति चेत्।

## पूर्वोक्ताक्षेपनिरासमुखेन धर्माधर्मयोर्लक्षणकथनम्

न। वेदबोधितश्रेयस्साधनताकत्वं धर्मत्वम्, तद्बोधिताऽनिष्टसाधनताकत्वमधर्मत्वम्, इत्येव तल्लक्षणोपपत्तेः। ज्योतिष्टोम-कलञ्जभक्षणादीनां हीष्टानिष्टसाधनता वेदबोधितेति, तत्र लक्षणसमन्वयः। अत्र वेदबोधितत्वं ब्रह्मस्वर्ग-नरकादावपीत्युत्तरदलम्। अन्न विषभक्षणादेरिष्टानिष्टसाधनत्वेऽपि तस्य वेदबोधितत्वाभावादाद्यम्।

## श्येनयागस्य धर्मत्वाक्षेप-समाधाने

श्येने चेष्टसाधनताया एव वेदबोधितत्वात् धर्मत्वमेव, अनिष्टजनकत्वं तु श्येनफलस्य वैरिमरणानुकूलशस्त्रघातादिरूपहिंसात्मकाभिचारस्यैव। तस्यैव च वेदबोधितानिष्टसाधनताकत्वादधर्मत्वम्, न तु श्येनस्येति व्यक्तञ्चतुर्थे[२]।

---

१-२—अध्वरमीमांसाशास्त्रस्यादिमं सूत्रम्–'अथातो धर्मजिज्ञासा' इति। तस्यायमर्थः—अथ–साङ्गवेदाध्ययनानन्तरम्, अतः—वेदाध्ययनस्य वृत्तत्वाद्धेतोः, धर्मपदमधर्मस्याप्युपलक्षणम्। धर्माधर्मयोर्निर्विचिकित्सज्ञानाय सन्दिग्धवेदवाक्यानां विचारः कर्तव्यः। ज्ञाने निर्विचिकित्सत्वञ्च संशय-विपर्ययशून्यत्वे सति संशय-विपर्ययोर्विरोधित्वम्। उपेक्षायामतिप्रसङ्गवारणाय सत्यन्तं विशेषणम्। संशय-विपर्ययविरोधिसंशय-विपर्ययान्तरेऽतिव्याप्तिवारणाय विशेष्यम्। इदमेव निर्विचिकित्सज्ञानं फलवदर्थज्ञानमित्युच्यते, अस्यैव स्वविषय-

## वैरिमरणसाधनस्य यागस्याधर्मत्वशंका-निरासौ धर्मत्वाधर्मत्वयोरुपाधिरूपत्ववर्णनञ्च

यत्र तु "वैरिमरणकामो यजेते"त्येवं विधिः, तत्रापि विधिना इष्टसाधनताबोधनाद्यागादेर्धर्मत्वमेव, न च तत्र यागस्यैव मरणानुकूलव्यापारत्वेन हिंसात्वात् 'न हिंस्यादि'ति निषेधविषयत्वम्, निषेधस्य रागप्राप्तहिंसोपजीवनेनाप्युपपत्तौ विहितेऽप्रवृत्तेः। न चैवं तादृशस्थले श्येनवत्परम्परयापि प्रत्यवायानुत्पत्तेश्शिष्टानां तत्र निष्कम्पप्रवृत्त्यापत्तिः,

"परस्योत्सादनार्थं यत् तत्तामसमुदाहृतम्"

इत्यादिवाक्यपर्यालोचनया अभिचारजनकश्येनवदभिचारस्यापि कर्मणस्तामसत्वेन निन्दितत्वात्तदुन्नीतनिषेधबलेन फलार्थं विहितस्यापि तस्यानिष्टजनकत्वेनाऽधर्मस्यापि सत्त्वात्तदनापत्तेः। अत एव धर्मत्वाधर्मत्वयोरुपाधिरूपत्वात्साङ्कर्येऽप्यदोषः।

---

धर्मानुष्ठानद्वारा स्वर्गादिफलवत्त्वात्। धर्मज्ञानमनुष्ठानाय, अधर्मज्ञानन्तु परिहारायेति विशेषः। एतत्सर्वं मनसि निधायाऽऽह—अनुष्ठानोपयोगितया विचारिताविति। अनुष्ठानोपयोगि ज्ञानम्। तत्साधनं विचार इत्यर्थः।

"कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात्।"

गण्डकीबाहुतरणादित्यादि पूर्वचरणत्रयं बोध्यम्।

विष्वक्सेनकथासु यः।

"नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्।"

इत्यवशिष्टचरणत्रयं बोध्यम्।

२—अत्रेदं बोध्यम्। क्रत्वर्थ—पुरुषार्थलक्षणाधिकरणस्य द्वितीयवर्णक इदं प्रतिपादितम्—यत् "श्येनेनाभिचरन्यजेत" इत्यत्र श्येनयागस्य वेदविहितस्येष्टसाधनत्वाद्धर्मत्वम्। तत्फलस्याभिचारस्य "न हिंस्यात्" इति निषेधादधर्मत्वमित्यभिधाय, प्रयोजनमित्यारभ्य एवञ्च श्येनस्य धर्मत्वमित्युक्तम्। तथा च तत्रत्योऽयं ग्रन्थः—

"प्रयोजनम्—पूर्वपक्षे श्येनफलस्याभिचारस्य विधेयत्वान्निषेधाविषयत्वम्। सिद्धान्ते तु रागप्राप्तत्वात् "न हिंस्यात्" इति निषेधविषयत्वम्। न च हिंसाशब्दस्य मरणनुकूलव्यापारवाचित्वात्तस्य च वैरिमरणाख्याभिचारफलकश्येनरूपस्य विहितत्वात्कथं निषेधविषयत्वमिति वाच्यम्? "अभिचरन् यजेत" इति सामानाधिकरण्यात् श्येनसमान-

## अर्थसंग्रहाद्युक्तार्थस्योपन्यास-निरासौ

[१]यत्तु धर्मलक्षणे बलवदनिष्टाननुबन्धित्वस्यापि प्रवेशाच्छ्येनादौ च तदभावान्न धर्मत्वमिति। तन्न। तत्प्रवेशे प्रयोजनाभावात्, अनिष्टगतद्वेषौत्कट्य-रूपस्य बलवत्त्वस्य प्राचीनकर्माधीनतयोक्तविधाननुबन्धित्वस्य श्येनेऽपि कदाचित्सम्भवाच्च। इतरथा श्येने सामग्र्यभावेन प्रवृत्त्यनापत्तेः। किञ्च श्येनादौ धर्मत्वाभावे तामसधर्मत्वकथनानुपपत्तिः। अत उक्तलक्षणयोर्युक्तस्तत्रापि समन्वयः।

[२]अभ्यनुज्ञाविधिना च दोषाभावमात्रस्यैवाक्षेपादिष्टसाधनतानाक्षेपेण रागप्राप्तेष्टसाधनताकस्याप्यनृतवदनस्य वेदबोधितेष्टसाधनताकत्वाभावान्न धर्मत्वापत्तिः।

---

कर्तृकत्वावगतेः, अभिचारपदस्य मरणानुकूलश्येनकर्तृनिष्ठविषदानादिरूपव्यापारवाचित्वावगतेस्तस्यैव श्येनफलत्वावसायात्। रागप्राप्तस्य तस्य निषेधविषयत्वोपपत्तेः। एवञ्चावश्यं श्येनेन विषदानाद्युत्पत्तिः, तेन वैरिमरणम्, न तु श्येनेनैव सा स्यादिति ध्येयम्। भा. दी. मद्रा. सं. पृ. ३०५–३०६

१—प्रयुक्तिलक्षणे क्रत्वर्थपुरुषार्थविचारप्रसङ्गे श्येनयागस्याभिचाररूपेष्ट-साधनत्वेन वेदबोधितत्वात् धर्मत्वमेवेत्युक्तम्। तत्रातिव्याप्तिवारकमर्थपदं न देयम्। ननु तत्फलस्य हिंसात्मकस्याभिचारस्य नरकरूपानिष्टजनकत्वेनार्थपदसार्थक्यमिति न शंकनीयम्। लिप्सानये फले विध्ययोगात्, तस्य वेदबोधितत्वाभावात्। अतोऽर्थपदं बलवद-निष्टाननुबन्धित्वपरम्। श्येनफलस्य शत्रुवधस्य नरकजनकत्वेनानर्थकत्वात् श्येनोपि तद्द्वारा अनर्थ एव, तस्यापि शत्रुवधद्वारा नरकजनकत्वादित्यर्थसंग्रहाद्युक्तमर्थं निरसितुमाह—'यत्तु इत्यादिना, प्रयोजनाभावादि'त्यन्तेन।

ननु श्येनादेर्धर्मत्वाभावे तामसधर्मत्वकथनं कथं घटत इति न शङ्कनीयम्। तामसत्वकथनेनैव श्येनयागस्यानर्थकत्वोपपत्तेः। अत एव लोके प्रसिद्धमिदं यत् क्रौर्यादिपुरस्सरतामसक्रियाया अनर्थकत्वमिति। अतः 'चोदनालक्षणोऽर्थो धर्मः' इति सूत्राक्षराविनाशेनैव 'कोऽर्थः यो निःश्रेयसाय ज्योतिष्टोमादिरि'ति भाष्योक्तं वेदबोधितत्वे सति श्रेयःसाधनत्वं धर्मस्य लक्षणमिति ग्रन्थकृत आशयः।

२—विवाहाद्यर्थानृतवदनविधिनाः ''नानृतं वदेदि''ति निषेधातिक्रमनिमित्तदोषाजन-कत्वमात्रमेवाक्षिप्यते न त्विष्टजनकत्वमिति। तत्रोक्तलक्षणाभावान्नातिप्रसङ्ग इत्यनुशयान आह—अभ्यनुज्ञेति।

[1]षोडशिग्रहणे च निषेधेन नानिष्टसाधनत्वाक्षेपः, प्रमाणाभावाद्, गौरवाच्च। अपि त्वेतदभावेपीतराङ्गैः क्रतुमहोपकारसिद्धिमात्रस्यैव; तावन्मात्रेणैव पुरुषस्य-निवृत्त्युपपत्तेः। अत एव तत्र प्रवृत्त्यर्थं विधिना फलाधिक्याक्षेपः। अतस्तत्रापि नाधर्मत्वापत्तिः।

---

१–'नातिरात्रे षोडशिनं गृह्णाति' इति। अत्रेयं विषयशुद्धिः। 'अतिरात्रे षोडशिनं गृह्णाति' इति श्रुत्याऽतिरात्रस्याधिकरणत्वमवगम्यते "यदाहवनीये जुहोती"तिवत्। तत्राहवनीयदेशादेरिव मुख्यमधिकरणत्वं न सम्भवति। अतोऽतिरात्रपदस्य लक्षणामङ्गीकृत्यातिरात्रोपकारस्योद्देश्यत्वं वक्तव्यं षोडशिग्रहणेनातिरात्रोपकारं भावयेदिति। एवञ्चेदमनुमानं फलति—"षोडशिग्रहणं अतिरात्रापकारजनकं प्रवर्तनाविषयत्वात्"। निरुक्तेन चानुमानेनावच्छेदकावच्छेदेन षोडशिग्रहणस्यातिरात्रोपकारजनकत्वे ज्ञाते, "नातिरात्रे षोडशिनं गृह्णाति" इति निषेधेन कस्मिंश्चिदतिरात्रप्रयोगे षोडशिग्रहणं तदुपकारजनकं न भवति। एवञ्च "षोडशिग्रहणं अतिरात्रानुपकारकं निवर्तनाविषयत्वात्" इत्यनुमानं फलति। विधिनेष्टसाधनत्वस्य प्रमितत्वेन "न कलञ्जं भक्षयेदि"त्यत्र नरकसाधनत्वमिव "नानृतं वदे"दित्यत्रेव क्रतुवैगुण्यजनकत्वं वानुमातुं न शक्यते। एवञ्च निषेधेन षोडशिग्रहणे इष्टसाधनत्वाभावेऽवगते प्रवृत्तिकारणभूतज्ञानस्याभावादेव प्रवृत्तिप्रतिबन्धेऽर्थात् षोडशिग्रहणान्निवर्तते। यत्प्रतियोगिनो यज्जनकत्वं ज्ञायते, तत्प्रतियोगिकाभावस्य तदभावजनकत्वबोधकत्वमिति सामान्यनियमस्यान्यत्र क्लृप्तत्वात्तदनुसारेण प्रकृते षोडशिग्रहणस्यातिरात्रानुकारकत्वे बोधितेऽतिरात्रोपकारजनकत्वरूपातिरात्रनुपकारजनकत्वाभावः षोडशिग्रहणाभावेऽर्थाद्बुध्यते। तथा च नरकाभावक्रतुसाद्गुण्यस्योद्देश्यत्वं निर्बाधमेव। यद्यप्यभावाद्भवोत्पत्तिर्नेष्यते सिद्धान्ते। अन्यथा सर्वदाऽभावसत्त्वेन क्रतूपकारफलापत्तिः केन वार्येत। तथापि षोडशिग्रहणाभावस्य निषेधावगतकारणत्वान्यथानुपपत्त्या षोडशिग्रहणभिन्नाङ्गविशिष्टषोडशिग्रहणाभावस्यैव कारणत्वं कल्प्यते।

एवञ्चेदमनुमानं फलति–अतिरात्रापूर्वसाधनीभूतषोडशिग्रहणजन्योपकारः षोडशिग्रहणभिन्नेतराङ्गजन्यः षोडशिग्रहणाजन्यत्वे सति प्रधानोपकारकत्वात्, समिदादिजन्योपकारवत्" निषेधवाक्यबलेनानुमितिः स्वीक्रियते। एवमेव षोडशिग्रहणविधिसाफल्याय फलभूमानुमितिरपि द्वितीयाङ्गीक्रियते। यथा "षोडशिग्रहणं फलबाहुल्यजनकोपकारजनकं अभ्यनुज्ञाविधिविषयभिन्नत्वे सति निषेध्यत्वसमानाधिकरणविधेयत्वात्" इति। इममेवाभिप्रायं मनसि निधायाह—अतिरात्रानुपकारकत्वानुमितिद्वारा तद्व्यतिरेकेणेतराङ्गैः क्रतुमहोपकारसिद्धेरप्यनुमानमिति।

वेदबोध्यत्वञ्च वेदातिरिक्तप्रमाणेन स्वातन्त्र्येणाबोध्यत्वे सति वेद-बोध्यत्वम्, तेन तत्त्वसाक्षात्काररूपब्रह्मज्ञानस्य ब्रह्मविषयकसविलासाज्ञान-निवृत्तिरूपमोक्षजनकत्वस्य प्रमाणान्तरसिद्धस्योपनिषद्बोध्यत्वेऽपि न तस्य धर्मत्वापत्तिः।

यदापि प्रपञ्चस्य सत्यत्वेन नाज्ञानकार्यत्वम्। मोक्षश्चैकविंशतिदुःखध्वंसादिरूपस्तत्त्वज्ञानजन्य इति मतमपि प्रामाणिकम्, तदा मोक्षजनकत्वस्य प्रमाणान्तरागम्यत्वात् तत्र धर्मत्वपरिहारार्थं वेदबोधितत्वं विहाय, विधिबोधितत्वं देयम्, [१]ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेन प्रवर्तनाविषयत्वाभावान्न विधिबोध्यत्वम्॥

[२]वस्तुतस्तु 'अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्यादौ ज्ञानेऽपि धर्मशब्दप्रयोगात्तस्य धर्मत्वेऽपि न क्षतिः। न च तत्रत्यदर्शनशब्दो ध्यानपरः, लक्षणायां प्रमाणाभावात्। ध्याने चित्तवृत्तिनिरोधरूपमुख्ययोगजन्यत्वासम्भवाच्च। उपासनादिवच्च ज्ञानस्य धर्मत्वेऽपि, ब्रह्मणो वेदबोधितश्रेयस्त्वावच्छिन्नसाधनकत्वाभावेन धर्मत्वाभावाद्धर्ममीमांसातो ब्रह्ममीमांसाया भेदोपपत्तिः।

---

एवमेव "नातिरात्रे षोडशिनं गृह्णाती"त्यादौ विहितनिषेधे तादृशोक्तविधहेतुज्ञानात् षोडशिग्रहणेऽतिरात्रानुपकारकत्वानुमितिद्वारा तद्व्यतिरेकेणैवेतराङ्गैः क्रतूपकारसिद्धेरप्यनुमानमित्यत्रापि पूर्वोक्ताशयोऽनुसन्धेयः—इति।

एवं च नातिरात्रे षोडशिनं गृह्णातीति निषेधेन ग्रहणविध्यविरोधायानिष्टसाधनत्वानाक्षेपादेव षोडशिग्रहणाभावेऽपीतिराङ्गैः क्रतूपकारसिद्धेरेवाक्षेपान्न षोडशिग्रहणस्य निषेध्यत्वेऽपि नाधर्मत्वमित्याशयो बोध्यः—इति।

१—मानाधीना मेयसिद्धिः, अतो ज्ञानं प्रमाणपरतन्त्रम्, अपि च यथावस्तु जायमानत्वात् वस्तुतन्त्रम्, न पुरुषतन्त्रं, उपासनादि तु पुरुषेण कर्तुमकर्तुमन्यथाकर्तुं च शक्यमिति तत्र पुरुषप्रयत्नस्य सार्थक्यम्। अयथावस्तु जायमानं तु ज्ञानमेव न भवति, अपितु अविद्यावृत्तिरिति वेदान्तिन इति।

अत्र प्रामाणिकपदेन व्यञ्जनया सूचितस्य दूषणासहत्वस्योपपादनं शारिरकभाष्यकारादिभिः कृतम्। तत्रैव द्रष्टव्यमिति।

२—अयन्त्विति—अस्य पूर्वार्धम् 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणामि'ति। अस्याय माशयः—इज्यादीनां धर्मत्व एव निर्धारणषष्ठी संगच्छते। यतश्च निर्धारणमिति सूत्रेण सजातीयनिर्धारण एव षष्ठीविधानात्। विशेषस्तु सप्तम्यर्थविचारे वक्ष्यत इति।

[1]अस्तु वा ब्रह्मणि धर्मलक्षणस्यातिव्याप्तिपरिहारार्थं पुरुषकृतिव्याप्यत्वं वेदबोधितश्रेयस्साधनताकत्वविशेषणम्, [2]गुणस्यापि चाश्रयविशिष्टस्य कृतिव्याप्यत्वान्नाव्याप्तिः। ज्ञानस्यापि च स्वरूपेण कृतिव्याप्यत्वाभावेऽपि सम्यग्जरणादि[3]-वत्तदनुकूलमनःप्रणिधानादेः कृतिव्याप्यत्वेन परम्परया तदाविष्टस्य कृति-व्याप्यत्वोपपत्तेर्नाव्याप्तिः। अत एव "आत्मा वा अरे द्रष्टव्य" इति विधि-प्रत्ययोऽप्येतदभिप्रायक इत्यप्येतन्मते [4]सुवचम्। '[5]असाधारणी वा कारणता लक्षणे प्रवेशनीया',

तत्तल्लक्षणमेव धर्माधर्मपदशक्यतावच्छेदकम्, तस्य च क्रिया-तज्जन्या-दृष्टसाधारण्येनैकयैव शक्त्या धर्माधर्मशब्दौ क्रिया-तज्जन्यादृष्टपराविति संक्षेपः[6]।

इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये
धर्मलक्षणविचारस्समाप्तः

---

अत्रेदं बोध्यम्—कर्मधर्मलक्षणघटकवेदपदेनापौरुषेयं वाक्यमेव विवक्षितम्। न तु मन्त्र-ब्राह्मणसमुदायात्मकम्। तथा सत्यसम्भवापत्तेः। अपौरुषेयत्वञ्च—पौरुषेयत्वाभावः। पौरुषेयत्वञ्च—सजातीयोच्चारणानपेक्षोच्चरितजातीयत्वम्। तथा चापौरुषेयं वाक्यं वेदपदेन विवक्षितम्।

—वेदबोधितेष्टसाधनत्वस्य ब्रह्मज्ञाने सद्भावादितिव्याप्तिरिति यदि विभाव्यते, तर्हि वेदबोधितत्वं विहाय, विधिबोधितत्वं वक्तव्यमिति मूल एव व्यक्तम्। श्रेयस्साधनत्वेन विहितत्वम्—विधिविषयभावनान्वयित्वमिति बोध्यम्।

१—नन्वखण्डाकारवृत्तिप्रतिबिम्बितं ब्रह्मैव अज्ञान-तत्कार्यनाशकमिति वेदबोधित-तादृशेष्टसाधनताकत्वात्तत्रातिव्याप्तिः, अत आह—अस्तु वेति।

२—गुणस्यापि—दधि-गोदोहनादेः।

३—सम्यग्जरणे "मा मे वाङ्नाभिमतिगाः" इति मन्त्रविनियोगः 'भक्षपेटिकाया-मुक्तः, तत्र सम्यग्जरणस्य' जाठराग्निबलेन स्वयं जायमानस्यास्मत्कृतिसाध्यत्वाभावेपि तदनुकूलवामभागशयनादेः प्रयत्नसाध्यत्वात् तद्विशिष्टस्य तस्य तथात्वम्, तत्र च मन्त्र विनियोगश्चेति तत्रैव व्यक्तम्।

४—मतान्तरे तु आत्मा दर्शनार्ह इति स्तुतिमात्रम्।

५—अत्रासंलग्नकोऽयं ग्रन्थ इत्यभियुक्ताः।

६—वस्तुतः धर्मशब्दस्य यागादिक्रियायामपूर्वे च प्रयोगसद्भावेऽपि नोभयत्र शक्तिः, गौरवात्। अपि तु भाष्य-वार्तिक-शास्त्रदीपिकादिबहुग्रन्थस्वारस्यात् प्रसिद्धिप्राचु-र्यानुसारेण यागादौ शक्तिः, तज्जन्येऽपूर्वे तु लक्षणेत्युपपत्तावुभयत्र शक्तिकल्पनाऽयोगात् ग्रन्थोऽप्यस्मिन्नर्थे नेतव्य इति मीमांसकमतपथपरिष्कारप्रकारः—इति।

# अथ विधिवादः

## धर्मलक्षणघटकसाधनत्वोपपादनम्

ननु करणत्वबोधकशब्दाभावात् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ कथं यागगतश्रेयस्साधनत्वस्य वेदबोध्यत्वम्, कश्च वा विधिः? यद्बोध्यत्वं श्रेयस्साधनत्वस्येति चेत्—

## लिङर्थे तार्किकाणामभिप्रायः

अत्र तार्किकाः—लिङादिश्रवणोत्तरं प्रवृत्तिदर्शनात्प्रवृत्तिसामग्री-जननद्वारा लिङादिज्ञानस्य प्रवृत्तावुपयोग इति तावदविवादम, तत्सामग्री च कृतिसाध्यत्वप्रकारकेच्छारूपा चिकीर्षा, तस्याश्च स्वरूपसत्याः कारणत्वात्तत्र लिङादिज्ञानस्यानुपयोगेपि चिकीर्षाकारणीभूतज्ञाने तदुपयोगः कल्प्यते। तच्च बलवदनिष्टाननुबन्धित्वज्ञानम्, कृतिसाध्यत्वज्ञानम, इष्टसाधनत्वज्ञानञ्च। अन्यतमाभावे इतरद्वयसत्त्वेऽपि मधु–विषसम्पृक्तान्नभोजने, चन्द्रस्पर्शे, मण्डलीकरणादौ च प्रवृत्त्यदर्शनात्। अतो लिङादिज्ञानेन त्रितयज्ञानजननाल्लिङादेर्बलवदनिष्टाननुबन्धित्वे कृतिसाध्यत्वे, इष्टसाधनत्वे, च शक्तिः। तत्रापि विशेषण-विशेष्यभावे विनिगमनाविरहात्प्रत्येकं शक्तिः। [1]पुष्पवन्तशब्दवच्च व्युत्पत्ति-वैचित्र्याद्युगपदर्थत्रयस्यापि बोधः।

## तार्किकमते लिङर्थानामन्वयोपपादनम्

अन्वयश्चास्य योग्यताबलाद्धात्वर्थे यागादावेव, 'न कलञ्जं भक्षयेदि'-त्यादौ च नञर्थे अभावे। सोऽपि न त्रितयस्यापि, कलञ्जभक्षणस्य कृतिसाध्य-त्वादिष्टसाधनत्वाच्च। अपि तु बलवदनिष्टाननुबन्धित्वस्यैव। अत एव तस्मिन् बलवदनिष्टाननुबन्धित्वाभावो बलवदनिष्टानुबन्धित्वं निषेधेन बोध्यत इति, कारणाभावात्तत्राऽप्रवृत्तिः। तस्य चाऽधर्मत्वं, यागादेश्च धर्मत्वम्।

श्येनादौ च कृतिसाध्यत्वेष्टसाधनत्वयोरेवाऽन्वयः, न तु बलवदनिष्टा-ननुबन्धित्वस्य, प्रमाणान्तरेण तत्फलस्याभिचारस्य नरकसाधनत्वावगमेन तस्य नरकप्रयोजकत्वरूपबलवदनिष्टानुबन्धित्वात् अत एव तत्रास्तिकानामप्रवृत्तिः-इत्याहुः।

---

१—अनेकार्थकशब्दानां एकस्मिन् प्रयोगे एकार्थबोधकत्वमिति नियमः, सकृदुच्चरित न्यायात् ततश्च कथं त्रयाणामेकदा बोध इत्यत आह—व्युत्पत्तीत्ति। यथा पुष्पवन्तशब्दात् सकृदुच्चरितात् चन्द्र–सूर्ययोरुभयोर्बोधः, तथाऽत्रापीति स्वीक्रियते, अत्र पृथक् कार्यकारणभावस्वीकारादित्यर्थः। सकृदुच्चरितनियमश्च सङ्कोचनीयः।

## तार्किकमतनिराकरणम्

तन्न । शक्तित्रयकल्पने गौरवात् । बलवदनिष्टाननुबन्धित्वज्ञानाभाव-मात्रेणेष्टसाधनताज्ञानादिनैव प्रवृत्तेरानुभविकत्वाच्च । अतो बलवदनिष्टानुबन्धित्वज्ञानं प्रवृत्तिप्रतिबन्धकम्, तदभावश्च स्वरूपसन्नेव कारणम् । अतश्च तत्रेच्छावदेव लिङादेरनुपयोगान्न तस्य तद्वाच्यत्वम् ।

किञ्चैवं नञ्समभिव्याहृतलिङर्थबलवदनिष्टाननुबन्धित्वप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारणम् । नञ्समभिव्याहृतबलवदनिष्टाननुबन्धित्वातिरिक्तलिङर्थप्रकारकशाब्दबोधे धातुपदजन्योपस्थितिः कारणम् । नञ्समभिव्याहृतलिङर्थप्रकारकशाब्दबोधे धातुपदजन्योपस्थितिः कारणम् । लिङ्समभिव्याहृतनञर्थप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम् । लिङसमभिव्याहृतनञर्थप्रकारकशाब्दबोधे धातुपदजन्योपस्थितिः कारणम् । नञसमभिव्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम् । नञ्समभिव्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारणमिति सप्त कार्यकारणभावाः[१] ।

किञ्चैवं बलवदनिष्टाननुबन्धित्वरूपलिङर्थस्यैव नञ्समभिव्याहारसत्त्वे तत्रान्वयः । तद्भिन्नलिङर्थस्य तु सर्वत्र धत्वर्थ एव, नञोऽसत्त्वे धात्वर्थ इति गुरुभूतानेकसमभिव्याहारज्ञानकार्यकारणभावकल्पनापत्तिः ।

---

ग्रन्थकृता पुष्पवच्छब्दवदिति प्रयुक्तं दृश्यते । अत्र पुष्पवन्तशब्दवदिति पाठेन भाव्यम् । मतुवन्ततया पुष्पवदादित्यादि पाठः साधुः, पुष्पवन्तेत्यादिनु प्रमादादागत इति केचन मन्वते । अत्रेदं बोध्यम् । अस्य शब्दस्य साधुत्वं भौवादिकाद्रक्षणाद्यर्थाअवतेः "जॄविशिष्टाभ्यांझञ्" इति पणिनिसूत्रेग औणादिके झचिं औणादिकताप्रयुक्तधात्वन्तरप्रकृतिकत्वस्याप्यवगमे अवन्तशब्दस्य प्रकाशपर घञन्त पुष्पपदेन षष्ठीतत्पुरुषे कृते शकन्ध्वादित्वात् पररुपे च रूपसिद्धिरिति । न च इष्टकाक्षेपलिप्तकर्दमक्षालनं अनुकरोतीयं रीतिरिति वाच्यम् । प्राक्-प्रत्यक् धरिणिधरशिखरस्थितपुष्पवन्ताभ्यामिति महाकवीनां प्रयोगाच्च ।

अतः पुष्पवन्त इत्येव साधुः, न तु पुष्पवदिति अस्मद्गुरवः म. म. हरिहरकृपालुमहाभागा इति । पुष्पवन्तशब्दोऽदन्तो रूढः रविशशिनौ पुष्पवन्ताख्याविति नाममालातट्टीकायां भरतः ।

१—अत्र एवं रीत्या क्रमो बोध्यः । न कलञ्जं भक्षयेदित्यत्र नञ् समभिव्याहृतलिङर्थबलवदनिष्टाननुबन्धित्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधे नञ् पदजन्योपस्थितिः कारणम् ।

एवं घटो नास्ति, न पचति चैत्र इत्यादौ लिङादिसमभिव्याहाराभावे नञर्थस्याभावस्याश्रये प्रथमान्तपदोपस्थाप्येऽन्वयः। लिङादिसमभिव्याहारसत्त्वे तु धात्वर्थ एवेति व्युत्पत्त्यनेकत्वम्।

तथाऽऽख्यातार्थस्य कृत्यादेर्नञोऽसत्त्वे आश्रयतासम्बन्धेन प्रथमान्तपदोपस्थाप्ये, तत्सत्त्वे तदर्थे प्रतियोगिताकत्वसम्बन्धेनेति गुरुभूताः कार्यकारणभावाः। "नातिरात्रे षोडशिनं गृह्णाति" इत्येदर्थमन्योऽपि।

## मीमांसकमते लाघवप्रदर्शनम्

अस्मन्मते तु वक्ष्यमाणरीत्या विध्यर्थस्य नञोऽसत्त्वे प्रयोज्यत्वसंसर्गेणाख्यातार्थकृतौ, तत्सत्त्वे स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेण, नञर्थस्य सर्वत्र प्रतियोगितासंसर्गेण, प्रथमान्तार्थस्य चाधेयत्वसंसर्गेणाख्यातार्थे कृतौ, इति चत्वारः वक्ष्यमाणरीत्या एक एव वेति लाघवम्।

किंच 'न कलञ्जं भक्षयेदि'त्यत्र भक्षणे बलवदनिष्टानुबन्धित्वबोधे अपीष्टसाधनत्वस्यापि विधिना बोधितत्वात्तस्य च लोकावगततृप्तिमादाय निर्वाहे वैयर्थ्यापत्तेः, भवन्मते विश्वजिन्न्यायेन स्वर्गकल्पनापत्तेः। तदधिकस्यैव नरकस्य कल्पनान्न बलवदनिष्टानुबन्धित्वविरोधः। अत एव यत्र कृतिसाध्यत्वबोधे न कथञ्चिदपि वैयर्थ्यपरिहारः, तत्र लोकसिद्धानुवादकत्वमपि नानुपपन्नम्।

किञ्च यदि त्रितयमपि लिङर्थः, तदा श्येने बलवदनिष्टाननुबन्धित्वस्य कुतो न बोधः, बाधादिति चेत्। कोऽयं बाधो नाम, श्येनफलस्याभिचारस्य हिंसात्वेन न हिंस्यादिति निषेधविषयत्वमेव बाधकमिति चेत्, तस्य सामान्यशास्त्रत्वेन रागप्राप्तहिंसोपजीवनेनापि चरितार्थतया यागीयपशुहिंसायामिव, श्येने बलवदनिष्टाननुबन्धित्वस्य विशिष्य विधिप्रमितत्वेन तन्निर्वाहार्थं श्येनेऽप्यप्रवृत्तेः। कथञ्चित् प्रवृत्तावप्यभिचारजन्यनरकस्याधिकत्वाकल्पनेनाभयोपपत्तेश्च।

---

(२) लिङ्समभिव्याहृतनञर्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधे धातुजन्योपस्थितिः कारणम्। एतेन न कलञ्जं भक्षयेदित्यत्र नञर्थान्वयबोध उपपादितः।

(३) इतरलिङर्थान्वयबोधार्थं नञ् समभिव्याहृतबलवदनिष्टाननुबन्धित्वेतरार्थप्रकारकबोधे धातुजन्योपस्थितिः कारणम्। एवं त्रिभिः कार्यकारणभावैः "न कलंजं भक्षयेदि"त्यत्र शाब्दबोधः पूर्णः। एवञ्च त्रयः कार्यकारणभावाः। (४) यजेतेत्यादावन्वयार्थं नञसमभिव्याहृतलिङर्थबोधे धातुजन्योपस्थितिः कारणमित्यत्रैकः। (५) "न पचति" इत्यत्र लिङसमभिव्याहृतनञर्थप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्।

## बलवदनिष्टाननुबन्धित्वस्वरूपविचारः

किञ्च बलवदनिष्टाननुबन्धित्वं न तावदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्, विधितस्तज्ज्ञानसत्त्वेऽपि स्वद्रव्यव्ययद्वेषवतोऽलसस्य च यागादौ प्रवृत्त्यदर्शनेन तज्ज्ञानस्य प्रवृत्तिं प्रत्यकारणत्वात्। इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वस्य निषेधशास्त्रतः कलञ्जभक्षणादौ ज्ञानेऽपि रागिणः प्रवृत्तिदर्शनेन तज्ज्ञानस्य न प्रवृत्तिप्रतिबन्धकत्वमपि। अतोऽनिष्टे बलवत्त्वम्–उत्कटद्वेषविषयत्वम्, औत्कट्यञ्च-जातिविशेषः फलैकोन्नेयः, तादृशद्वेषश्च प्राचीनकर्मानुरोधेन। अतश्च यागादिजन्येपि दुःखे यदा प्राचीनकर्मवशादुत्कटो द्वेषः, तदा तस्य बलवदनिष्टानुबन्धित्वज्ञानसत्त्वात् तत्राप्रवृत्तिः, यदा तु शुभकर्मवशात् नोत्कटो द्वेषः, तदा तस्य बलवदनिष्टानुबन्धित्वज्ञानाभावसत्त्वात् प्रतिबन्धकाभावेन तत्र प्रवृत्तिः।

एवं कलञ्जभक्षणादौ श्येने च प्राचीनकर्मवशेनैव प्रवृत्त्यप्रवृत्ती कादाचित्के उपपादनीये। अतश्च यागादौ नैयत्येन बलवदनिष्टाननुबन्धित्वस्य विधिना बोधयितुमशक्यत्वात्कलञ्जभक्षणादौ च नैयत्येन तदभावस्य नञा बोधयितुमशक्यत्वाच्च न तत्र लिङादेश्शक्तिः।

## तस्य विध्यर्थत्वानभ्युपगमेऽनिष्टापादन-तन्निरासौ

यत्तु–बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभावे "तृप्तिकामः कलञ्जं भक्षयेदि"ति लौकिकवाक्यस्य प्रामाण्यापत्तिः, बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिरूपविध्यर्थस्य तत्राबाधात्। अस्मन्मते तु बलवदनिष्टानुबन्धित्वस्य तत्र श्रुतिबोधितत्वादप्रामाण्योपपत्तिः—इति।

तन्न। बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिविध्यर्थवादिनाम्मते तदापत्तावपि, प्रवर्तनाविध्यर्थवादिमते तदनापत्तेः। तथाहि—नञोऽसत्त्वे वक्ष्यमाणा प्रवर्तना प्रयोज्यत्वसंसर्गेणाख्यातार्थे कृतावन्वेतीति वक्ष्यते, तच्च

(६) तत्रैव लिङसमभिव्याहृतनञ्समभिव्याहृताख्यातार्थकृतिप्रकारकबोधे नञ्पदजन्योपस्थितिः कारणमिति द्वौ।

(७) 'पचति'-इत्यत्र नञसमभिव्याहृताख्यातार्थकृतिप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्—इति एकः—आहत्य सप्त कार्यकारणभावाः–इति।

एतेषामेवोपपादनं 'किञ्चे'त्यादिना क्रियते, न तु कार्यकारणभावाधिक्यमिति बोध्यम्।

प्रयोज्यत्वं स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वमिति[1] च, तद्यत्र प्रमाणान्तरेण यागादाविष्टसाधनता न बुद्ध्यते, तत्रेष्टसाधनत्वस्यैव प्रवर्तनाज्ञानादनुमितिः। यत्र तु तत् प्रमाणान्तरेणाऽवगतम्, निषेधेन च तस्यानिष्टसाधनत्वमपि। यथा-दीक्षितान्नभोजनस्य [2]"न दीक्षितस्यान्नमश्नीयादि"ति निषेधात्, तत्र [3]"हुतायां वपायां दीक्षितस्यान्नमश्नीयादि"ति पुनर्विधिरनिष्टसाधनत्वाभावस्यैवाक्षेपकः, न त्विष्टसाधनत्वस्य, तस्य प्रमाणान्तरसिद्धत्वेन [4]सिषाधयिषाभावेनानुमित्यनुत्पत्तेः। अनिष्टसाधनत्वाभावज्ञानस्यापि स्वविषयविशेष्यकानिष्टसाधनत्वज्ञाने अप्रामाण्यनिश्चायकतया प्रवृत्तावुपयोगः। प्रवृत्तौ ह्यप्रामाण्यज्ञानानास्कन्दितानिष्टसाधनताज्ञानमेव द्वेषबलवत्तादशायां प्रतिबन्धकम्। अतश्च तेनाप्रामाण्यनिश्चये विशिष्टाभावसम्पादकतया तस्य प्रवृत्तावुपयोगस्सुलभ एव। अतश्च निषेधविषयविषयकेन विधिनाभ्यनुज्ञाविधिरूपेण स्वविषयेऽनिष्टसाधनत्वाभावस्यैवाक्षेपात्, तस्य च लौकिकवाक्ये प्रत्यक्षश्रुतिविरोधेन बाधितत्वादप्रामाण्योपपत्तिः, अतो न तावद् बलवदनिष्टाननुबन्धित्वं लिङर्थः।

## कृतिसाध्यत्वस्य लिङर्थत्वनिराकरणम्

नापि कृतिसाध्यत्वम्, तस्य भवन्मते पाकानुकूलत्वस्य कृतौ भाने समानसंवित्संवेद्यतया पाकेऽपि कृतिसाध्यत्वस्य भानोपपत्तेरन्यलभ्यतया लिङादिवाच्यत्वानुपपत्तेः। अस्मन्मतेऽपि प्रवर्तनाक्षेपादेवेष्टसाधनत्वादिवद्भानोपपत्तेरन्यलभ्यत्वम्। अतः परिशेषादिष्टसाधनत्वमेव लिङाद्यर्थ इति वक्तव्यम्।

## इष्टसाधनत्वं लिङर्थ इति मतखण्डनम्

इष्यते च कैश्चिदाधुनिकैरिदमेव। नञ्समभिव्याहारस्थले त्वनिष्टसाधनतायां लिङो लक्षणा, अतो लिङादेरिष्टसाधनत्वमेवार्थः—इति।

तदपि न। तथात्व इष्टसाधनत्वज्ञानादेव प्रवृत्तेः 'आचार्यप्रेरितोऽहं गामानयामी'त्यादावाचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तेः। न च प्रवृत्तिजनकेष्टसाधनताबोधकलिङुच्चारयितृत्वात्तस्य प्रवर्तकत्वव्यवहारः। तथात्वे राज-

---

१—प्रयोज्यत्वमपीति० मु० पा० २—मै० सं० ३-६-७. ३—ऐ० ब्रा० ४ लिङः इति-मु-पु-पा०

४—सिषाधयिषाभावेनेति—संसर्गघटकानुमितौ सिषाधयिषाजन्यत्वं निवेशनीयमिति भावः।

प्रेरितपदातेस्तादृशलिङुच्चारयितृत्वेन प्रवर्तकत्वापत्तौ पदातिप्रेरितोऽहं न गामानयामि, किन्तु राजप्रेरित इति पदातौ प्रवर्तकत्वाभावव्यवहारानुपपत्तेः ।

अथ अन्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वं प्रवर्तकत्वम्, तथात्वे पिशुनप्रेरिते राज्ञे प्रवर्तकत्वानापत्तेः । अतश्चैतादृशव्यवहारबलात् प्रवृत्तिकारणीभूतज्ञानविषयीभूतेच्छाश्रयत्वेनैव राजादेः प्रवर्तकत्वं वाच्यम् । नचेच्छाया लिङादिवाच्यत्वाभावेऽपि ज्ञानं सम्भवति, [1]विषयविशेषस्येष्टसाधनत्वेऽपि परेच्छाविषयत्वाभावेन व्यभिचारादिष्टसाधनत्वस्यानुमापकत्वानुपपत्तेः । अतः परिशेषाल्लिङादिवाच्यैव सा, तथा च प्रवृत्तिविषये यागादाविष्टसाधनत्वादेवानुमानेनैव बोधोपपत्तेर्न पुनर्वाच्यत्वकल्पनावसरः । भवति हि "अयमत्र प्रवर्तताम्" इत्याकारकाप्तेच्छाविषयत्वमिष्टसाधनत्वव्याप्तम्, अतस्तेन तदनुमानम् ।

## हेतुघटकदलानां प्रयोजनकथनम्

अत्रासुखे सुखत्वभ्रमेण सुख एव वा सुखं मे जायतामितीच्छाविषयत्वसत्त्वेपीष्टसाधनत्वाभावात्तत्र व्यभिचारवारणाय हेतावाकारकपर्यन्तानुधावनम् । प्रतारकतादृशेच्छाविषये व्यभिचारवारणाय आप्तेति । अत्र चेच्छाविषयत्वमिच्छाविषयीभूतप्रवृत्तिविषयत्वं बोध्यम् । तेन प्रवृत्तौ, तदाश्रये पुरुषे वा इच्छाविषय इष्टसाधनत्वाभावेऽपि न व्यभिचारः । यागादावेव च हेतुसत्त्वादिष्टसाधनत्वानुमानम् ।

## लिङादिपदशक्यतावच्छेदकविचारः

अत्र च यद्यपि वक्ष्यमाणरीत्या व्यापारत्वम्, इच्छात्वमेव वा लिङादिपदशक्यतावच्छेदकम् । तथापि तेन रूपेणोक्तविधेच्छाया एव लिङादिपदाद्बोधः, तत्तद्धातुप्रत्ययादिसमभिव्याहारस्य नियामकत्वात् । भवति हि "मृदस्ति पात्रं करिष्यामी"त्यादौ पात्रत्वेन सामान्यरूपेण मृण्मयपात्रविशेष्यको बोधः, समभिव्याहारात्, प्रवृत्तिसामर्थ्याच्च प्रवृत्त्याश्रयस्य पुरुषस्य बोधः, वचनेङ्गितादिना चाप्तत्वेऽवगते इच्छायामाप्तनिष्ठत्वस्य समानसंवित्संवेद्यतया यागादौ तादृशेच्छाविषयत्वस्य बोध इति न हेत्वसिद्धिः । तेनोक्तविधसामग्र्या हेतुज्ञाने जाते इष्टसाधनत्वाद्यनुमानं सुलभमेव । [2]अतश्चान्यलभ्यत्वादिष्टसाधनत्वादेर्न लिङादिवाच्यत्वम् ।

---

१—नन्वयमिच्छाविषय इष्टसाधनत्वादित्यनुमानादिच्छाविषयत्वमनुमेयम् अत आह—विषयेति ।

२—अनन्यलभ्यः शब्दार्थ इति न्यायात् ।

### इष्टसाधनत्वस्य विध्यर्थत्वेऽतिप्रसक्तयः

किञ्च भवन्मते येन स्वत एव पाकादाविष्टसाधनत्वादि बुद्ध्वा प्रवृत्तम्, तस्य पाकवर्तमानतादशायां "चैत्रः पचेदि"ति प्रयोगापत्तिः; इष्टसाधनत्वादिविशिष्टपाकानुकूलकृतिमत्त्वस्य चैत्रेऽबाधितत्वात, चैत्रः पचतीतिवत् वर्तमानत्वाबोधेऽपि क्षतिविरहात्। मन्मते तु तादृशप्रवृत्तेः प्रेरणाप्रयोज्यत्वाभावाद्विषय-बाधेनाप्रामाण्योपपत्तिस्तादृशप्रयोगस्येति वैषम्यम्।

### प्रेरणावादिमतेऽतिप्रसक्तेरुद्भावन-तद्वारणे

ननु भवन्मतेऽपि यत्रान्यप्रेरणया चैत्रस्य प्रवृत्तिः, तत्र पाकवर्तमानतादशायां 'चैत्रः पचेदि'ति प्रयोगस्य प्रामाण्यापत्तिः, पाकानुकूलायाश्चैत्रनिष्ठप्रवृत्तेः प्रेरणाप्रयोज्यत्वस्याबाधात्। [1]वस्तुतस्तु स्वतस्सिद्धेष्टसाधानताज्ञानजन्यप्रवृत्तेरपि प्रेरणाप्रयोज्यत्वस्वरूपयोग्यतया प्रेरणाप्रयोज्यत्वात्तत्रापि चैत्रः पचेदिति प्रयोगापत्तिरनिवार्यैव। न हि तत्र फलोपहितप्रयोज्यत्वविशिष्टा कृतिश्शाब्दबोधे भासते। बहुशश्शाब्दबोधेप्यालस्यादिना प्रवृत्त्यनुत्पत्तेरिति चेत्। न। प्रवृत्तित्वावच्छिन्नं प्रति न प्रेरणायाः प्रयोजकता, व्यभिचारात्; [2]अपि तु प्रेरणोत्तरप्रवृत्तित्वावच्छिन्नं प्रति, "इयं प्रवृत्तिः प्रेरणाप्रयोज्या, इयं न, किन्तु स्वत एव" इत्यादिसार्वलौकिकव्यवहारात्।

### अत्रैव प्रकारान्तरवर्णनम्

यद्वा प्रेरणा प्रयोज्यतावच्छेदकतया प्रवृत्तित्वव्याप्यं धर्मान्तरमेवेत्यपि वक्तुं शक्यम्, अत एव तत्प्रयोजकतावच्छेदकतया प्रेरणात्वमखण्डो धर्मो लोकवेदसाधारण इत्यपि वदयते। तस्य च प्रवृत्तित्वव्याप्यधर्मस्य लिङादिसमभि-

---

१—किमर्थम् अन्यप्रेरणाजन्यप्रवृत्तावतिप्रसक्त्युद्भावनं स्वाभाविकप्रवृत्तावपि सा अस्त्येवेत्यभिप्रेत्याह—वस्तुतस्त्विति—अत्र प्रेरणाफलोपहितत्वम् अव्यवहितोत्तरत्वत्वसंबन्धेन प्रेरणाविशिष्टत्वम्, स्वरूपयोग्यत्वं तु प्रेरणाप्रयोज्यतावच्छेदकधर्मवत्वं बोध्यम्।

२—अव्यवहितोत्तरत्वसंबन्धेन प्रेरणाविशिष्टप्रवृत्तिं प्रति प्रेरणा कारणमिति विशिष्यैव कार्यकारणभावस्वीकारान्न स्वाभाविकप्रवृत्तिस्थले व्यभिचारः। तस्याः प्रेरणाकार्यतावच्छेदकानाक्रान्ततया नोक्तापत्तिरित्यर्थः।

व्याहारस्थले लक्षणया आख्याताद् बोधः, सामान्यधर्मेणैव वा प्रेरणा प्रयोज्य-व्यक्त्युपस्थितिरित्याद्यन्येद्तत् । सर्वथा स्वतःसिद्धेष्टसाधनताज्ञानजन्य प्रवृत्तिं प्रति न प्रेरणाया स्वरूपयोग्यतयापि प्रयोजकत्वमिति न तादृश-प्रवृत्तिमति लिङादिमद्वाक्यप्रयोगापत्तिः ।

## प्रेरणाप्रयोज्यप्रवृत्तिवर्तमानतादशायां पचेदिति प्रयोगवारणम्

प्रेरणाप्रयोज्यप्रवृत्तिवर्तमानतादशायां तु प्रयोगापत्तिरेवं निवार्या। नाऽभिः प्रेरणाया विषयतासम्बन्धेनैव प्रवृत्तावन्वय इत्युच्यते। न वा प्रेरणाविषयीभूत-प्रवृत्तिविषयत्वेन यागादौ येन तादृशप्रयोगापत्तिश्शंक्येत। किन्त्वत एव साक्षात्सम्बन्धपरित्यागेन स्वज्ञानजन्यानुमितिप्रयोज्यत्वसंसर्गेणाख्यातार्थप्रवृत्तौ प्रेरणाया प्रकारत्वम्। अस्ति हि प्रेरणाज्ञानजन्येष्टसाधनत्वाद्यनुमितेः प्रवृत्तिं प्रति जनकत्वात्प्रयोजकत्वम् । उपपादयिष्यते एतदुपरिष्टात् । तत्प्रेरणाज्ञानं स्वप्राक्कालीन–स्वज्ञानोपधेयमेव स्वरूपेण तद्व्यक्तित्वेन संसर्गमध्ये निवेश्यते। प्रथमस्वपदम्–तत्तात्प्रवृत्तिव्यक्तिपरम्, द्वितीयस्वपदं तत्तल्लिङादिव्यक्तिपरम्, तेन तत्तत्प्रवृत्तिप्रागभावकाले यल्लिङादिपद–ज्ञानं तेनोत्पदितं यत् प्रेरणाज्ञानं तज्जन्येष्टसाधनत्वानुमितिप्रयोज्यत्वस्वरूप–योग्यत्वं संसर्ग इति फलितार्थः। अतश्च प्रवृत्तिवर्तमानतादशायामनेन संसर्गेण प्रेरणावत्वस्य प्रवृत्तौ बाधान्न तादृशप्रयोगापत्तिरत्रन्मते । अन्यदीयप्रेरणाप्रयोज्यप्रवृत्तिप्राक्काले अन्यदीय-लिङन्तप्रयोगस्तु राजप्रेरितप्रवृत्तिकाले पदात्यादीनामन्येषामाप्तादीनाञ्च लिङन्त-प्रयोगदर्शनादिष्टापत्त्यैव नापादनीया। सम्भवति हि तत्र राजप्रेरणामादाय प्रयोगः, अन्यदीयप्रेरणामादाय च, तज्ज्ञानजन्यानुमितेरपि प्रवृत्तिस्वरूपयोग्य-त्वात्। अतः सिद्धं न तार्किकरीत्या इष्टसाधनत्वादेर्लिङाद्यर्थत्वम्, अपि तु पूर्वोक्तरीत्या प्रवर्तकेच्छाया एव ।

## प्रेरणावादे पाणिनिसम्मतिप्रदर्शनम्, इतरेषां विध्यर्थानां विवरणं च

'विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्, लोट् च', छन्दसि 'लिङर्थे लेडि'त्यादिपाणिन्यनुशासनद्यमेवार्थो विज्ञायते।

विधिः-निकृष्टस्य प्रेरणम्। निमन्त्रणम्–अनिष्टजनकीभूताकरणप्रति-योगित्वानुमापकप्रवर्तकेच्छा। यथा 'श्राद्धादौ दौहित्रादेः[1] प्रवर्तनम्। तत्र प्रमाणान्तरेणाऽभोजने प्रत्यवायपावगमात्। अत एव विधिस्थल इवाग्रिमयोरपि

१—श्राद्धादौ दौहित्रादेः निमन्त्रितस्याभोजने प्रत्यवायः कुत्रोक्त इत्यन्वेषणीयम्। "त्रीणि श्राद्धे पवित्राणि दौहित्रः कुतपस्तिलाः" इत्यत्र मनुस्मृतौ पृ. १०३ दौहित्रः

च लाघवादिष्टसाधनत्वानुमापकत्वमेव। कृतिसाध्यत्वानुमापकत्वं सर्वत्रैव। मास्तु वा तत्। आमन्त्रणम्कामचारानुज्ञा। तत्र प्रेरकस्याऽऽग्रहभावमात्रम्। अन्यत्र सर्वत्राऽऽग्रहोऽप्यधिको भासते। अधीष्टम्-सत्कारपूर्वकमुत्तमं प्रति प्रेरणम्। एतेषु चतुर्षु प्रवर्तनात्वस्यैकस्यानुगतत्वात् तेनैव रूपेण एकैव शक्तिः, अन्यांशस्य-तु प्रमाणान्तरलभ्यत्वान्न शक्यत्वम्। संप्रश्न-प्रार्थनयोस्त्वतिरिक्तैव शक्तिः। 'किन्त्वमधीयीथाः भवति मे प्रार्थना वेदमधीयीये'त्यादौ, तत्र प्रवर्तनात्वाभावात्। अनुशासनिकी वा निरूढ़लक्षणा। 'हेतुहेतुमतोर्लिङ्' 'कामप्रवेदने कच्चिति' इत्याद्यनुशासनेनेव हेतुत्वादौ, प्रचुरप्रयोगेण प्रवर्तनात्वस्यैव शक्यतावच्छेद-कत्वात्।

प्रवर्तनात्वं च-प्रवृत्त्यनुकूलव्यापारत्वम्, अनुकूलत्वं च [1]जनकत्वम्। तच्च लोके पुरुषाशयवृत्ति, वेदे च तदभावादिच्छाभिन्नस्य कस्यचित् प्रवर्तनात्वं बोध्यम्।

## मण्डन-पार्थसारथ्योः मतम्

अत्रापीष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङाद्यर्थ इति [2]मण्डनमिश्राः। अर्थभावनाभिधानानुकूलाया लिङादिनिष्ठशक्तेरेवाभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङ्वाच्यत्वं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वमात्रं कल्प्यत इति तु पार्थसारथिः।

[3]वस्तुतस्तु इष्टसाधनत्व—कृतिसाध्यत्वयोर्विनिगमनाविरहः, [4]तथात्वे वा लोकेऽपि तस्यैव तथात्वापत्तेस्तैर्किकमतोक्तदूषणापत्तिः शक्तिप्रवर्तनावादिमतेपि उक्तशक्तेः संख्याभिधानानुकूलशक्त्या लिङ्त्वादिनैव वा विनिगमनाविरहस्तदवस्थ एव।

---

श्राद्धभोजनार्हेषु अनुकल्पेषु मध्ये प्रधानत्वेनोक्तः। मुख्यकल्पत्वेन तु दौहित्रो नहीत्यभि-प्रायो मेधातिथिभाष्ये व्यक्तः।

१—जनकत्वमत्र प्रयोजकत्वम्, न तु साक्षात्, कारणत्वं, प्रेरणायाः स्वज्ञानजन्येष्ट-साधनताज्ञानजन्यप्रवृत्तौ साक्षात्कारणत्वाभावात्।

२—विधिविवेके 'पुंसो नेष्टाभ्युपायत्वादि'त्यादिकारिकायामिति शेषः।

३—अलौकिकधर्मज्ञानस्य प्रवृत्तिं प्रति साक्षात्कारणत्वं न्यायसुधोक्तं निरस्यति— वस्तुतस्त्वति—

४—तथात्वेइष्टसाधनत्वकृतिसाध्यत्वयोरन्यतरस्य लिङर्थत्वे।

अतः [1]"क्लृप्तैर्विनिगमनाविरहे कल्प्यमन्यत्सिद्ध्यती'ति न्यायेन-अलौकिको धर्म एव लिङादिनिष्ठः प्रवर्तनात्वेन लिङादिवाच्यश्च कल्प्यते, तज्ज्ञानञ्च प्रवृत्तिं प्रति कारणमिति **न्यायसुधाकृन्मतमेव** कथञ्चिद्युक्तमिति व्यक्तं कौस्तुभे।

---

१–अत्र मूले क्लृप्तेन विनिगमनाविरह इति पाठः श्रूयते, क्लृप्तेषु विनिगमनाविरह इति अर्थवादाधिकरणप्रभावल्यां पाठः, परं कौस्तुभपर्यालोचनया क्लृप्तैरिति पाठः साधीयान्। अतः स एव पाठ उपरि सन्निवेशितः, अत्रत्यविषयावगतये कौस्तुभग्रन्थः अधस्तादुद्ध्रियते। तथा हि—अत्र षष्ठे शास्त्रदीपिकायां पार्थसारथिः 'नातिरिक्त-धर्मान्तरकल्पनम्, तथा सति तत्सद्भावः, तस्य च प्रवृत्तिहेतुत्वं लिङादिनिष्ठत्वं तल्लक्ष्यत्वमिति चतुष्टयकल्पनाद्गौरवापत्तेः। अतो लाघवादर्थभावनाभिधानानुकूलशक्तेरभिधाख्याया लिङादिनिष्ठत्वेन क्लृप्तायाः केवलं प्रवृत्तिहेतुत्वं लिङादिलक्ष्यत्वं च कल्प्यम्। अतः सैव प्रवर्तनात्वेन लिङाद्यभिहिता प्रवृत्तिहेतुर्विध्यादिपदाभिधेया चेति। तन्न। तर्हि ततोऽप्यतिलाघवेनेष्टसाधनत्वस्य प्रवृत्तिहेतुत्वेनापि क्लृप्तस्य लिङादिलक्ष्यत्वमात्रकल्पनया प्रवर्तनाविशेषत्वोपपत्तेर्जितं मण्डनेन।

न चेष्टसाधनत्वस्य यागादिनिष्ठत्वेन लिङादिनिष्ठत्वाभावाद्यागादेश्चासिद्धत्वेन प्रवर्तकत्वायोगात् प्रवर्तनायाः प्रवर्तकनिष्ठत्वस्य स्थापितत्वान्नेष्टसाधनत्वस्य प्रवर्तनाविशेषत्वोपपत्तिरिति वाच्यम्; तर्हि फलेच्छाया उपायेच्छाया वा सिद्धत्वेन लिङ् मां प्रवर्तयतीतिवदिच्छा मां प्रवर्तयतीत्यनुभवाच्च प्रवर्तकत्वोपपत्तेस्तन्निष्ठत्वेन क्लृप्तस्येच्छात्वस्य प्रवृत्तिहेतुत्वं इच्छात्वेन कार्यपदाभिधेयत्वेऽपि प्रवर्तनात्वेन लिङादिवाच्यत्वं परिकल्प्य, प्रवर्तनाविशेषत्वोपपत्त्या विनिगमनाविरहात्।

न चेच्छायाः प्रवर्तकत्वे इच्छात्वे प्रवृत्तिहेतुत्वाभावेऽपि हेतुतावच्छेदकत्वस्य क्लृप्तत्वाल्लाघवेन तस्यैव प्रवर्तनाविशेषत्वोपपत्तौ न तदादाय शक्तेर्विनिगमनाविरहश्शंक्य इति वाच्यम्, इच्छावत् कृतिसाध्यत्वज्ञानस्यापि सिद्धत्वेन प्रवर्तकत्वात्तन्निष्ठज्ञानत्वस्य प्रवर्तनात्वेन लिङादिपदवाच्यत्वकल्पनया प्रवर्तनाविशेषत्वोपपत्तौ तदादायेच्छात्वेऽपि विनिगमनाविरहस्यावारणात्।

न चेच्छात्वादीनामतिप्रसक्तत्वेन प्रवर्तकमात्रनिष्ठत्वाभावान्न तेषां प्रवृत्तिहेतुत्वकल्पनाशंका; शक्तेरपि लिङादिष्वतिप्रसक्तत्वस्य तुल्यत्वात्। तस्मात् क्लृप्तैर्विनिगमनाविरहाद्धर्मान्तरकल्पनैवोचितेत्युत्पश्यामः—इति।

## व्यापारस्य लिङ्वाच्यत्वनिरूपणम्

वस्तुतस्तु लोके नेच्छायाः स्वरूपेण प्रवृत्तिं प्रति कारणत्वम्, तदभावेऽपि तद्भ्रमेण प्रवृत्त्युदयात्, स्वरूपेण कारणत्वे लिङुक्तिवैयर्थ्याच्च, नापि तज्ज्ञानस्य कारणत्वम्, इष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिविशेषं प्रति प्रयोजकतयैवान्वयव्यतिरेकसिद्धौ कारणत्वकल्पने मानाभावात्। अतः प्रवृत्तिप्रयोजकमेव प्रवर्तनात्वं वाच्यम्। तदपि च न लिङादेश्शक्यतावच्छेदकम्, गौरवादन्यलभ्य-[1]त्वाच्च। प्रवृत्तिर्हि आख्यातादेव लभ्यते। प्रयोजकत्वं तु संसर्गबलेनेति न तदपि शक्यतावच्छेदककोटिप्रविष्टम्, अपितु लोकवेदसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम्। अस्ति हि लौकिके लिङादिशब्दोपस्थाप्ये पुरुषाशये प्रवृत्तिसाधनीभूतेष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिप्रयोजकव्यापारत्वम्। वेदेऽपि शब्दश्रवणोत्तरकालममनुमायैव तत्कार्यदर्शनादिच्छायाश्चापौरुषेये वेदे बाधात्कार्यानुमेयमलौकिकं धर्मं लिङादिनिष्ठं लिङादिवाच्यं परिकल्प्य, तस्य तदनुमापकत्वकल्पनात्तत्रापि प्रवृत्तिप्रयोजकव्यापारत्वम्। अत उभयसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम्।

यद्यपि च [2]तदन्यत्राप्यतिप्रसक्तम्, तथापि समभिव्याहारबलाद् विशेषलाभः। तथाहि—लिङ्पदाद् व्यापारत्वावच्छिन्नव्यापारमात्रोपस्थितावपि तस्याख्यातोपात्तकृतौ निरुक्तसंसर्गेणान्वये बुद्धे पश्चात्तत्संसर्गस्य तत्त्वेन रूपेण बोधवेलायां तेन तेन प्रमाणेन विशेषलाभो नासुलभः। इष्यत एव हि 'भूतलं घटवदि'त्यादौ घटपदात् घटत्वावच्छिन्नघटमात्रप्रतीतावपि तस्य, योग्यसंसर्गेण भूतले घटान्वये बुद्धे तत्संसर्गस्य तत्त्वेन जिज्ञासायां प्रमाणान्तरेण संयोगत्वादिना संयोगादिरूपसंसर्गप्रतीतिवद् भूतलवृत्तिघटविशेषप्रतीतिः।

## तद्विशेषलाभप्रकारोपन्यासः

तदयमत्र क्रमः,–प्रथमं लिङादिपदाद्व्यापारत्वेन सामान्यरूपेणैव व्यापारो-

---

सर्वमतेऽपि परस्परं विनिगमनाविरहस्य स्फुटत्वादतिरिक्तो लिङादिशब्दनिष्ठः, अलौकिको धर्म एव प्रवर्तनात्वेन वेदे लिङर्थ इत्यर्थवादाधिकरणकौस्तुभेऽभिहित इति। अत एव भाट्टदीपिकायां "वेदे लिङादिशब्दनिष्ठ एव कश्चिद्धर्मः" पृ०–१८ इत्युक्तम्। अत्र कश्चिदित्यनेनाऽलौकिकत्वमुक्तम्। एवशब्देन मतान्तरनिरास इति बोध्यम्।

१—ननु प्रामाणिकं गौरवं न दोषायेत्यत आह—अन्यलभ्यत्वाच्चेति—

२—तत् = व्यापारत्वम्,—अन्यत्र—लौकिके घटानयनादौ।

पस्थितिः । पश्चादाख्यातोपस्थितकृतौ[1] तस्य स्वविषयकज्ञानविशेष[2]जन्यानुमितिप्रयोज्यत्वसंसर्गेण [3]तत्त्वेनानुपस्थितेनैवान्वयः। शाब्दबोधश्च व्यापारवती यागादिकृतिरिति। न च लिङर्थविशेष्यक एव शाब्दबोध इति भ्रमितव्यम्, '[4]भावप्रधानमाख्यातमि'ति स्मृत्या लकारार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति अर्थभावनाविशेष्यतासम्बन्धेनाऽऽख्यातपदजन्योपस्थितिः कारणमिति कालादिसाधारण्येनैककार्यकारणभावकल्पनालाघवानुरोधेन चाख्यातार्थकृतेरेव मुख्यविशेष्यत्वात्।

## अवशिष्टलिङर्थानां अन्वयप्रदर्शनम्

सम्प्रश्न-प्रार्थनयोरपि विषयतासम्बन्धेन तस्यामेवान्वयः, हेतुत्वादेरपि स्वरूपसम्बन्धेन तस्यामन्वयेऽपि तस्या [5]उपलक्षणत्वादिनेतरक्रियायामन्वयः। लिङो वा हेतुमत्त्वरूपसंसर्गतात्पर्यग्राहकत्वम्। तेनाख्यातार्थस्यैव "आर्तिमार्च्छेदि"त्यादावितरक्रियान्वयो हेतुमत्त्वसंसर्गेणैवेति न कश्चिद्विरोधः।

## कामप्रवेदनस्याप्यन्वयोपपादनम्

एवं 'यदि शालीन् भुञ्जीत, तर्हि दध्युपसिञ्चे'दित्यादौ कामप्रवेदनेपि स्वविषयकेच्छानिमित्तकत्वं संसर्गः, लिङ् तात्पर्यग्राहकः। आख्यातमेव वा इच्छालक्षकम्, 'यदि शालीन्भोक्तुमिच्छेदि'त्यत्र निमित्तत्वमेव संसर्ग इति न क्वापि व्युत्पत्त्यन्तरम्। अतश्च 'देवदत्तः पचेदि'त्यादौ लोके तावच्छाब्दबोधोत्तरं

---

१—तस्य=व्यापाररूपस्य लिङर्थस्य।

२—ज्ञानविशेषः=यागः विषयतासंबन्धेन तादृशव्यापारवानिति पक्षधर्मताज्ञानम्।

३—विशिष्टज्ञाने संसर्गज्ञानस्यानपेक्षितत्वादित्यर्थः

४—अत्र भावो न धात्वर्थः, किन्तु भावना प्रवृत्त्यपरपर्याया। तस्या एव च शाब्दबोधे विशेष्यता, उक्तस्मृत्यनुसारात्।

५—लकारार्थाश्च प्रवर्तना-काल-संख्यादयः 'हेतुहेतुमतोर्लिङ्' इत्यनेन कृष्णं नमेचेत् सुखं यायादित्यादौ लिङ्, तत्र प्रथमलिङर्थः हेतुत्वम्, तस्य नमनेऽन्वयः नमनस्य यायादितिधात्वर्थान्वितभावनायामुपलक्षणत्वेनान्वयः, उपलक्षणत्वम्—ज्ञापकत्वम्।

स्वसंसर्गस्य तत्त्वेन जिज्ञासायां 'चैत्रप्रेरितोऽहं पचामि' इत्यादिव्यवहार-वशात् व्यापारस्येच्छारूपत्वेऽवगते, पाकविषयकृतिसम्बन्धात् 'पाकेऽयं प्रवर्तताम्मि'त्याकारकत्वे च [1]तस्यास्सिद्धे, तदाश्रयस्य प्रयोजकवृद्धस्य प्रमाणान्तरेणाप्तत्वावगमे समानसंवित्संवेद्यतया 'पाकेऽयं प्रवर्ततामि'त्याद्याकारकाप्तनिष्ठेच्छाविषयकृतिविषयत्वरूपहेतुज्ञानं मानसं जायते, ततश्च तस्मिन् हेतौ क्रियान्तरदृष्टान्तेनेष्टसाधनत्व-कृतिसाध्यत्वयोर्व्याप्तिस्फुरणादुभयविषयिणी अनुमितिरुत्पद्यते।

## नित्यकर्मविधौ लिङर्थविचारः

क्वचिच्चानिष्टसाधनीभूताकरणप्रतियोगित्वादेरपि, सामग्रीवशात्। तत्सामग्री च 'अयमत्र प्रवर्ततामि'त्याकारकस्वभङ्गनिमित्तका[2]निष्टकर्त्रिच्छाविषयत्वरूपहेतुपरामर्शादिरूपा। स्वपदमिच्छापरम्, इदञ्च तत्र तत्र कौस्तुभादौ स्पष्टम्। तस्याश्च प्रवृत्तिप्रयोजकत्वं स्पष्टमेवेति संसर्गस्य तत्त्वेन लाभः, इच्छाविशेषलाभश्चोभयं सुलभम्।

## वैदिकलिङ्स्थलेऽनुमितिप्रकारनिरूपणम्, मीमांसकमतेन आप्तत्वनिर्वचनं च

वेदेऽपि लिङादिशब्दश्रवणोत्तरकालं व्यापारत्वरूपेण व्यापाररूपपदार्थोपस्थित्या 'निरुक्तसम्बन्धेन व्यापारवती यागादिकृतिरि'ति शाब्दबोधे जाते, सम्बन्धस्य तत्त्वेन जिज्ञासायां, 'वेदस्थलिङादिप्रेरितोऽहं यागादि करोमी'-त्यादिव्यवहाराद्यागविषयकृतिसम्बन्धाच्च तस्य लिङादिनिष्ठत्वं 'यागेऽयम्प्रवर्ततामि'त्याकारकत्वञ्चावगम्यते। अत एव वर्णात्मकलिङादेर्नित्यत्वात् तद्वृत्त्यलौकिकधर्मस्यापि नित्यत्वम्। न च भ्रम-प्रमासाधारण्येन तज्ज्ञानस्यैवानुमितिजनकत्वाल्लोकवदेव तत्सिद्धौ प्रमाणाभावः। वेदोत्थज्ञानस्य भ्रमत्वानुपपत्त्या तत्सिद्धेः। तस्मिन् यागविषयककृतिविषयिता च न ज्ञानादिविषयितासाधारणी, अतिरिक्ता वा, अपि तु 'पाकेऽयं प्रवर्ततामि'त्यादिलौकिकेच्छानिष्ठविषयितासाधारणी इच्छासामान्यनिष्ठविषयिताभिन्ना लिङाद्यर्थमात्रनिष्ठा, अनुगतप्रतीतेरेव तत्र प्रमाणत्वात्। अतश्च लिङादेर्निर्दोषत्वेनानाप्तभिन्नत्वेऽवधारिते

---

पक्षान्तरे प्रथमभावना द्वितीयभावनायां हेतुमत्त्वसंबन्धेनान्वेति, तत्र तादृशसंसर्गतात्पर्यग्राहकं लिङ्पदमित्यर्थः। 'यस्योभयं हविरार्तिमार्च्छेत्, ऐन्द्रं पञ्चशरावमोदनं निर्वपेदि'त्यत्रप्रथमाख्यातार्थस्य हेतुत्वेनान्वयः, द्वितीयं संसर्गतात्पर्यग्राहकम्।

१—तस्याः—प्रवर्तकेच्छायाः।

२—अनिष्टकर्त्रिति—अनिष्टविशेष्यककर्त्रिच्छेत्यर्थः।

# अथ कर्तृलक्षणावादः

## आख्यातस्य कर्तृलक्षकत्वे प्रमाणकथनम्

नन्विदमाख्यातस्य कृतिवाचिनः कर्तृलक्षकत्वे सिद्धेऽप्यत्, तत्रैव तु प्रमाणाभाव इति चेत्, पचतीत्युक्ते कीदृग्विध इति प्रश्नस्यैव तत्र प्रमाणत्वात्। न हि धर्मिज्ञानं विना धर्मविशेषप्रश्नो युज्यते। न च धर्मिज्ञानं त्वन्मते सम्भवति, पचतिपदार्थपाकप्रकारकानुकूलतासंसर्गकाख्यातार्थविशेष्यकाखण्ड-वाक्यार्थबोधस्यैव जननात्। प्रथमान्तपदजन्योपस्थितिरूपकारणाभावेन कृति-प्रकारकाश्रयविशेष्यकबोधस्य जनयितुमशक्यत्वात्। यद्यपि भवन्मते कृति-प्रकारकबोधं प्रति आख्यातपदज्ञानत्वेनापि कारणताऽस्ति, तथापि तत्कार्यतावच्छे-दकं यदि कृतिप्रकारकबोधत्वम्, तदा आश्रयज्ञानाभावाद्धर्मिज्ञानाभावस्सुलभ एव। यदि तु कृतिप्रकारकाश्रयविशेष्यकबोधत्वम्, तदाऽपि तत्र प्रथमान्त-पदजन्योपस्थितेरपि दण्डचक्रादिवत् समुच्चित्यकारणत्वात् तदभावेनाभावः सुलभः। अतोऽवश्यं प्रश्नोपपादकधर्मिज्ञानार्थम्, प्रथमान्तपदाध्याहारार्थं चाश्रयज्ञानं वाच्यम्।

तच्च शाब्दम्, मानसम्, स्मरणं वेति विप्रतिपत्तिः। तत्र 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३-४-६९) इत्यनुशासनाच्छाब्दमेव। अत्र चकारात् "कर्तरि कृत्" (३-४-६७) इति सूत्रीयस्य कर्तरीत्यस्यानुकर्षणात् कर्तर्यपि लकार-लाभः। इदं हि न लकारस्य कर्त्रादौ शक्तिरित्येवम्परम्। पदार्थे वृत्तौ च तात्पर्य-कल्पने गौरवात्। लाघवेन कृतौ शक्तावधारितायां तदनुशासनस्य निरूढ-लक्षणयैव व्याख्येयत्वाच्च। कर्तुर्मानसत्वे तत्र संख्यान्वयानुपपत्तेः। पचतीत्ये-तावन्मात्रश्रवणे कर्तरि एकत्वसंशयापत्तेश्च। पचतीति पाचक इत्येवं कृदर्थ-विवरणाच्च। अत आश्रयज्ञानस्य शाब्दत्वमुक्तम्।

## कर्तुश्शाब्दत्वे लाघवप्रदर्शनम्

[1]युक्तञ्चैतत् आख्यातोपात्तसंख्याप्रकारकशाब्दबोधं प्रति आख्यात-पदस्य प्रथमान्तपदापेक्षयोपस्थितत्वेनाख्यातपदजन्योपस्थितित्वेन कारणत्व-कल्पने लाघवम्। अतो लाघवादनुशासनात् धर्मिज्ञानानुरोधात् आख्यातस्य कर्त्रादौ लक्षणा।

---

१—प्रधानभूतक्रियान्वयित्वात् सुबर्थे कारकादेरेव प्राधान्यम्। लिङ्ग-संख्यादेस्तु समानाभिधानश्रुत्या तदन्वयित्वम्। तच्च साक्षादयोग्यमिति, पदश्रुतेः, योग्यतारूपालिङ्गाच्च

## कर्तुः संसर्गविधया भानवादिमतनिराकरणम्

एतेन एकत्वादेरस्मन्मते कर्त्रादिघटितसामानाधिकरण्यसम्बन्धेनैव भावनान्वयात्कर्त्रादेः सांसर्गिकविषयतयैव बोध इत्यपास्तम्। पाककर्ता एको न-वेत्यस्य संशयस्य पचतीत्यतो व्युदासानुपपत्तेः, अनुशासनवैयर्थ्यापत्तेश्च लक्षणेति न कश्चिद्विरोधः। धर्मितावच्छेदकविशिष्टधर्मिज्ञानाभावात्पाककर्ता क इति संशयानापत्तेश्च। न च क्वचिदपि शक्तिमात्रजन्यशाब्दबोधाभावे तस्यैव पदस्यार्थान्तरलक्षकत्वासम्भव इत्यत्र प्रमाणमस्ति। मुख्यार्थासम्भवस्येवार्थान्तर-बोधानुपपत्तेरेव लाघवतर्कसहकृतायाः लक्षणातात्पर्यग्राहकत्वात्। तत्रापि शबादिविकरणस्थले कर्तरि, यगादिविकरणस्थले च कर्मणीत्येवं व्यवस्थया लक्षणा। लक्ष्यतावच्छेदकञ्चाश्रयत्वं कर्तृत्व-कर्मत्वादि, अखण्डोपाधिर्वा।

## कर्तृत्वादेरखण्डोपाधित्वप्रसाधनम्

कर्तृत्वादिकं हि कृत्याश्रयत्वादिसमनियतोऽखण्डधर्मोऽनुगतव्यवहार-साक्षिकः, न तु कृत्याश्रयत्वादिकमेव। तथात्वे चैत्रेण पाकः क्रियत इत्यत्र चैत्रेण पाक इत्येतावतैव चैत्रनिष्ठकृतिसाध्यः पाक इत्यर्थबोधोपपत्तेः पुनः क्रियत इति कृतिवाचकपदप्रयोगवैयर्थ्यापत्तेः। अतः कर्तृत्वादिकमखण्डमेव तृतीयाद्यर्थः। तस्य चाश्रयत्वादिवदेव कृत्यादिनिरूपितत्वादिधर्मकल्पनाच्चैत्रनिष्ठकर्तृत्व-निरूपककृतिसाध्यः पाक इत्यर्थबोधोपपत्तिः। इदञ्च परमतेनोक्तम्, स्वमते उक्तकृतिसाध्यत्वं पाकवृत्तीत्येवं शाब्दबोधस्य वक्ष्यमाणत्वात्। सर्वथा कर्तृत्वादिकमखण्डोपाधिः,। इष्टञ्चैतत्प्राचां दम्पत्योर्व्यासज्यवृत्तिकर्तृत्वसिद्ध्यर्थम्, अग्निषोमयोर्व्यासज्यवृत्तिदेवतात्वसिद्ध्यर्थञ्च। अन्यथा कृत्याश्रयत्वरूपकर्तृत्वस्य, त्यज्यमानद्रव्योद्देश्यत्वरूपस्य च देवतात्वस्य, आश्रयभेदेन भिन्नतया व्यासज्य-वृत्तित्वसिद्धान्तानुपपत्तेः। अतः कर्तृत्वम्, कर्मत्वञ्च लक्ष्यतावच्छेदकीकृत्य कर्तृ–कर्मणोराख्यातस्य लक्षणा। इदञ्चौत्सर्गिकी रीतिमनुसृत्योक्तम्।

---

पार्णिकः प्रातिपदिकार्थान्वय इति, प्रातिपदिकार्थस्यापि लिङ्ग-संख्ये प्रति प्राधान्यम्, अत एव विभक्त्युपात्तसंख्यान्वययोग्यत्वरूपा सत्त्वताऽप्यस्य प्रातिपदिकान्वयमादायैव निर्वाह्या इत्यन्तग्रन्थसन्दर्भेण भावार्थाधिकरणे इति शेषः।

अत्रेदं बोध्यम्। यथा महानसीयवह्नित्वनिष्ठावच्छेदकतयोस्सम्बन्धभेदेन सावच्छिन्नत्व-निरवच्छिन्नत्वभेदेन च भिन्नत्वेपि महानसीयवह्न्यभावप्रतियोगितावच्छेदकतात्वेनानुगत-रूपेण व्यासज्यवृत्तित्वमङ्गीकृत्य, तस्य पर्याप्तसम्बन्धेन हेतुसमानाधिकरणाभावप्रतियोगि-तावच्छेदकत्वावच्छिन्नपत्नीनिष्ठायाभेदस्य साध्यतावच्छेदके वन्हित्वे इति सिद्धान्तलक्षणगादा-

## यजेतेत्यादौ दम्पत्योः सहाधिकारे कर्तृत्वलक्षणा

यत्र [1]षष्ठोक्तन्यायेनाश्रयानेकत्वग्राहकं प्रमाणान्तरमस्ति, यथा—दम्पत्योः, तत्र विधिवाक्ये एकवचनश्रवणादाख्याते नाश्रयलक्षणा, एकत्वानन्वयापत्तेः [2]अतस्तत्र द्वित्वलक्षणायां प्रमाणाभावादाख्यातेनैव लाघवात् [3]कर्तृत्वत्वेन कर्तृत्वं लक्ष्यते। न तदाश्रयोऽपि। तस्यार्थादेव बोधोपपत्तेः। इष्यते च कर्तृत्वत्वादिना कर्तृत्वबोधस्तृतीयादौ। स परं शक्त्या तत्र। अत्र तु लक्षणया इत्येतावान् भेदः। तत्रैव च साक्षात्सम्बन्धेनैकत्वान्वयः। नत्वाश्रये, तस्य द्वित्वात्।

यदपि तत्राख्यातसामानाधिकरणं स्वर्गकामपदम्, तदपि न कर्तृपरम्, अपितु लक्षणयोपस्थितस्वर्गाख्यभाव्यपरमेव। प्रथमा च तत्रत्या लक्षणया कर्मत्वार्थिकेति, न तत्सामानाधिकरण्यबलेनाप्याख्यातेनाश्रयलक्षणा। प्रथमाप्रयोजकन्तु सर्वत्र कर्तृत्वोक्तिरेव। सा परं कर्तृत्वप्रकारिका, कर्तृत्वविशेष्यिका वेत्यन्यदेतत्। अतस्सिद्धाऽऽख्यातेऽपि कर्तृत्वादिलक्षणा।

---

धर्यो रीतिरियमनुसृता, तथैव प्रकृतेऽपि पत्नीनिष्ठायाः पतिनिष्ठायाश्च यागकृतेर्भिन्नभिन्नत्वेन व्यासज्यवृत्तित्वासम्भवात्। अनेकनिष्ठस्यैकस्यैव द्वित्वादेर्व्यासज्यवृत्तित्वं दृश्यते। अतः कर्तृत्वस्याखण्डोपाधित्वेनोभयनिष्ठकर्तृत्वमेकमेवेति व्यासज्यवृत्तित्वम्, उपपद्यत इति मन्तव्यम्। भिन्नभिन्नाया अपि यागकृतेः प्रकृतयागानुकूलकृतित्वेनानुगतरूपेण व्यासज्यवृत्तित्वसम्भवात्। एवं चाख्यातेन लक्षणीयं कर्तृत्वं कृत्याश्रयत्वसमनियतमखण्डोपाधिरूपम्। तच्च दम्पत्योर्व्यासज्यवृत्ति, तद्गतं चैकत्वं 'यजेत स्वर्गकामः' इत्यत्रैकवचनेन प्रतिपाद्यत इति बोध्यम्।

१—लिङ्गविशेषनिर्देशादित्यादिषष्ठाध्यायप्रथमपादीयतृतीयाधिकरणे दम्पत्योः सहाधिकार उक्तः, तेन न्यायेनेत्यर्थः।

२—ननु अनन्वयपरिहाराय द्वित्वे लक्षणाऽस्तु, नेत्याह—**अत इति**।

३—कर्तृत्वत्वेन कर्तृत्वं न तु अखण्डोपाधिरूपम्।

४—आख्यातेन भावनावाचिना लाघवात्कर्तृत्वत्वेन कर्तृत्वं लक्ष्यते। तृतीयाविभक्त्याऽपि कर्तृत्वत्वेन कर्तृत्वस्य बोधः। परमनयोरयं विशेषः—तृतीयादौ स शक्त्या बोध्यते, आख्याते तु लक्षणया विशेषः। तच्च कर्तृत्वं कृत्याश्रयत्वसमनियतमखण्डोपाधिरूपम्, न तु कृत्याश्रयत्वादिरूपः सखण्डो धर्मः। एवमेव दम्पत्योर्व्यासज्यवृत्तिकर्तृत्वमिष्यते, अग्निषोमयोर्व्यासज्यवृत्तिदेवतात्वञ्च। अन्यथा कृत्याश्रयत्वरूपकर्तृत्वस्य, त्यज्यमानद्रव्योद्देश्यरूपस्य देवतात्वस्याऽऽश्रयभेदेन भिन्नतया व्यासज्यवृत्तित्वसिद्धान्तो न संगच्छेत। तथा च कर्तृत्वलक्षितावच्छेदकर्तृत्वस्य कर्त्रादौ निरूढा लक्षणेति।

## भावनाया मुख्यविशेष्यत्वे युक्तयः

[1]तदपि न भावनां प्रति विशेष्यम्। किन्तु भावनैव तद्विशेष्या। इतरथा 'पचति ब्रूते' इति प्रयोगापत्तिः[2]। 'पक्ता ब्रूते' इतिवत् तस्य योग्यत्वात्। 'पचति भवती'ति भाष्योदाहृतप्रयोगानापत्तेश्च[3]।

यत्तु 'अपाक्षीद्भवति, पक्ष्यति-भवती'ति तदुदाहृतप्रयोगः। स च भूधातुना युक्तत्वलक्षणया भूत-भाविपाकभावनावृत्ति वर्तमानयुक्तत्वाश्रयत्वमिति शाब्दबोधाङ्गीकारान्नायुक्तः।

दृश्यते च युज्यत इत्यर्थे लोके भवतीति प्रयोगः। एवं 'पचति भवती'ति प्रयोगोऽपि कर्तृविशेष्यत्वपक्षे नोपपद्यते। तथात्वे 'पचन्ति भवन्ती'ति प्रयोगापत्तेश्च। [4]'भावप्रधानमाख्यातम्' इति निरुक्तस्मृत्या भावनातिरिक्ताख्यातार्थमात्रं प्रति भावपदवाच्यभावनाया विशेष्यत्वोक्तेश्च। अत्र हि न प्रकृत्यर्थं प्रति भावनायाः प्राधान्यं बोध्यते। 'प्रकृति-प्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन' इति स्मृत्यैव प्रकृत्यर्थनिरूपितप्रत्ययार्थप्राधान्यस्य सुबर्थसाधारण्येन सिद्धेः।

## धात्वर्थ एव भावपदार्थ इति वैयाकरणमतखण्डनम्

न च 'धात्वर्थः केवलश्शुद्धो भाव इत्यभिधीयते'

इति वैयाकरणस्मृत्यनुरोधेन भावशब्दस्य धात्वर्थपरत्वावसायात्, तस्यैवाख्यातार्थापेक्षया प्राधान्यमनया स्मृत्या नियम्यते, प्रत्ययार्थप्राधान्यस्मृतिस्तु सामान्यविषयत्वात् सुबर्थाभिप्रायेण व्याख्येयेति वैयाकरणमतमेव युक्तमिति वाच्यम्, एतस्य परिभाषारूपत्वेन नदीवृद्ध्यादिवदन्यत्राप्रवृत्तेः। अतएव व्याकरणशास्त्र एव तस्य 'भावे घञ्' (३-३-१८) इत्यादौ प्रवृत्तिः। सापि न सर्वत्र, 'भावे त्व-तलावि'त्यादावप्रवृत्तेः। अतश्च निरुक्तभावशब्देन णिजन्तभूधातोरच्प्रत्ययान्तत्वव्युत्पत्त्या भवनानुकूलव्यापाररूपा भावनैवोच्यते, न धात्वर्थः।

अतएव 'सर्वमाख्यातजं नामे'ति स्मृत्याऽऽख्या[5]तशब्दस्य धातुपरत्वावसायादनयाऽपि स्मृत्या धातोरेव भावप्राधान्यनियमाद्धात्वर्थमुख्यविशेष्यकत्वोपपत्तिरित्यपास्तम्।

कृदन्ते पाचकपदादौ आख्यातशब्दप्रयोगाभावेन तत्रत्याख्यातशब्द[5]स्य धातौ लाक्षणिकत्वस्य कौस्तुभे व्युत्पादितत्वात्। अतश्चाख्यातार्थानेकत्वे कस्य

---

१—तदपि=आख्यातलक्ष्यं कर्त्रादिकम्। २—पचतीत्यस्य पाककर्तेत्यर्थकत्वादित्यर्थः।

३—प्रयोगानापत्तेरिति—पाककर्त्ता वर्तमानयुक्तत्वाश्रय इत्यर्थस्यासामञ्जस्यात्।

४—निरुक्तगत 'भावप्रधानमाख्यातमि'तिवाक्यगतभावशब्देनेत्यर्थः।

५—आख्यातपदं लकारसामान्यवाचि (दशलकार), न धातुवाचि, अत एव गोपथ-

**प्राधान्यम्, कस्य वा गुणत्वमित्यपेक्षिते[1] 'भावप्रधानमाख्यातम्' इति स्मृत्या भावनातिरिक्ताख्यातार्थं प्रति भावनाया एव प्राधान्यमिति नियम्यते। अतएव कालादिसाधारण्येनैकः कार्यकारणभाव इत्यपि लाघवम्।**

---

ब्राह्मणे 'को धातुः, किं प्रातिपदिकम्, किन्नामाख्यातमि' ( गो० ब्रा० १ प्र २४-२६ षट्त्रिंशत्प्रश्नोत्तरखण्डे ) ति धातोः पार्थक्येनाऽऽख्यातस्य गणनयाऽऽख्यातपदस्य तिङ्मात्रवाचित्वं निश्चीयते। एतदनुसारेण 'सर्वमाख्यातजं नामे'ति निरुक्तस्मृतौ आख्यातस्य लकारसामान्यवाचिनो लक्षणया धातुपरत्वमास्थीयते। प्रकृताधिकरणगतगुणसूत्रेऽपि 'तान्याख्यातानी' त्यत्र रहस्यकृता लक्षणया धातुपरत्वमुक्तम्। शाब्दिकैरपि 'आख्यातमाख्यातेन क्रियासातत्ये' इत्यत्राख्यातशब्दस्तिङन्तपरतया व्याख्यातः। अतः प्रकृते आख्यातपदं लकारसामान्यवाचि, न तु धातुवाचि, क्वाचित्कः प्रयोगो लक्षणया नेतव्य इति ध्येयम्।

१-अत्रेदं बोध्यम्-निरुक्तस्मृतौ भावशब्देन भावनाया ग्रहणम्, न तु धात्वर्थस्य, आख्यातं प्रत्ययस्यैव वाचकम्, न तु धातोः, तत्र लक्षणेति पाठकानां सुखावगतये कौस्तुभसन्दर्भोऽधस्तादुद्ध्रियते। तथाहि-**न 'भावप्रधानमाख्यातमि'**तिस्मृतिविरोधः। तथा हि-न तावदियं स्मृतिः, भावशब्दवाच्यभावनाप्राधान्यं प्रकृत्यर्थापेक्षया विधत्ते, तस्य 'प्रकृतिप्रत्ययावि'ति स्मृत्यैव सिद्धेः। किन्तु यदाख्यातं शक्ति-लक्षणासाधारण्येन भावना-सङ्ख्या-काल-कर्त्रादिपरम्, तत्र भावनायाः प्राधान्यम्, न तु कर्त्रादेरित्येवंपरम्। अत एव [ 'धात्वर्थः केवलश्शुद्धो भाव इत्यभिधीयेत' ] इति व्याकरणस्मृत्या धात्वर्थस्य भावपरिभाषणेऽपि नाऽस्यां निरुक्तस्मृतौ भावशब्देन तद्ग्रहणम्। तथा सति धातोरेव भावप्रधानत्वापत्त्या आख्यातशब्दस्य भावप्रधानत्वानुपपत्तेः। किन्तु णिजन्तस्य भुव अजन्तत्वव्युपत्त्या आख्यातार्थभावनायाः। वैयाकरणपरिभाषणं तु तच्छास्त्रविहितकृत्यविषयम्, न निरुक्तविषयमपि, तस्य परिभाषारूपत्वेनाऽन्यत्राऽप्रवृत्तेः। तदपि च 'नपुंसके भावे क्तः' इत्यादौ शुद्धधात्वर्थग्रहणमेव, न त्वतलार्थभावग्रहणमित्येतदर्थम्। नापि भावपदशक्यनियमार्थं, प्रवृत्तिनिमित्तादेस्तदनुपपत्तेः।

न च **'सर्वमाख्यातजं नामे'**ति निरुक्तकारेणाप्यभिधानादाख्यातशब्देन धातुरेवोच्यत इति वाच्यम्। कृदन्ते धातावाख्यातपदप्रयोगाभावेनाऽऽख्यातपदस्य धातुवाचित्वानुपपत्तेः। निरुक्ते नामनिर्वचनेत्वाऽऽख्यातशब्देन लक्षणयाऽऽख्यातान्तस्य धातोर्ग्रहणं नाऽनुपपन्नम्। अत एव **'आख्यातानी'**ति जैमिनिसूत्रेऽपि चाख्यातशब्देन लक्षणयाऽऽख्यातान्तधातोर्ग्रहणम्। एतावांस्तु विशेषः-यज्जैमिनिसूत्रे आख्यान्तत्वं विशेषणम्, तेन तिङन्तस्यैव धातोर्ग्रहणम्। निरुक्ते तूपलक्षणम्, तेन तत्र तिङन्तस्य धातुस्वरूपस्यैव। न त्वेतावताऽऽख्यातशब्दस्य धातुवाचित्वम्, कृदन्ते धातौ पाक इत्यादौ तत्पदप्रयोगाभावेन तद्वाचित्वानुपपत्तेः। अपि तु तिङ्वाचित्वमेव। अतः

## आख्यातार्थकालस्य भावनान्वयप्रकारः

कालोपि नञ्समभिव्याहाराभावे कालिकसम्बन्धेन भावनायामन्वेति, नञ्समभिव्याहारे तु तत्कालीनाभावप्रतियोगित्वसम्बन्धेन ( साक्षादेव वा ) तस्यामेव । तथाहि—'वर्तमाने लट्' ( ३-२-१२३ ) इति सूत्रात्पचतीत्यत्र वर्तमानत्वं लडर्थः । तच्च लडुच्चारणकालाभिन्नकालकत्वम् । तच्च कालिकवृत्तित्व-सम्बन्धेन कृतावन्वेति, विक्लृत्त्युपधायककृतिकूटान्तर्गतयत्किञ्चित्कृतेस्तदुच्चारण-कालीनत्वात् । अत्र सर्वत्र कृतिशब्दो भावनापरः । तेन जानातीत्यादावा-श्रयत्वस्य वर्तमानत्वान्न क्षतिः । नश्यतीत्यादौ च धातुना नाशस्यैवोक्तिः । प्रत्ययेन च प्रतियोगित्वस्य लक्षणा । वर्तमानकालस्य परमनुभवानुरोधेन स्ववृत्त्युत्पत्तिकनाशीयत्वसम्बम्धेन प्रतियोगित्व एवान्वयः । तथा च घटवृत्ति नाशप्रतियोगित्वं वर्तमानकालोत्पत्तिकनाशीयत्वसम्बन्धेन वर्तमानत्ववदित्येव अस्मन्मते शाब्दबोधः । एवञ्च धातुना उत्पत्तिं लक्षयित्वा, तस्यां कालस्य कथञ्चि-दन्वय इत्यपि न कल्पनीयम् । एवं सम्बन्धभेदसत्त्वेऽपि वर्तमानकालस्सर्वत्र-कृतावेवान्वतीति, न क्वापि तस्य विशेष्यान्तरकल्पना ।

## संबन्धभेदेनान्वये कार्य-कारणभावानन्त्यशङ्का-परिहारौ

न [1]चैकविशेष्यत्वलाभेऽपि सम्ब[2]न्धभेदेन समभिव्याहारज्ञानस्य कार्य-कारणभावानन्त्य[3]तादवस्थ्यमिति वाच्यम् । वस्तुतस्सम्बन्धभेदेऽपि सम्बन्ध-

---

आख्यातप्रतिपाद्यानेकपदार्थविषये कस्य प्राधान्यमिति जिज्ञासायां भावनाप्राधान्यमनया स्मृत्या नियम्यते। एवं 'सत्वप्रधानानि नामानी' त्यत्राऽप्यनेकार्थप्रतिपादकेषु प्रातिपदिकापरनाम धेयेषु नामसु पाचको लावक इत्यादिषु विभक्त्युपात्तसङ्ख्यान्वययोगिनस्सत्त्वपदाभिधेयस्य-कर्तुरेव प्राधान्यम्, न तु पाककृतेरित्ययमर्थोऽवगम्यते। नामत्वाविशेषेपि च यत्र घटादिपदे घट-घटत्वरूपयोरप्यर्थयोर्विभक्त्युपात्तसङ्ख्यान्वययोगित्वरूपा सत्त्वता, तत्रोभयोरपि शब्दतः प्राधान्यम्। अत एव आकृत्यधिकरणेऽभिहितम्—यत्तृतीयादौ जातेरेव सङ्ख्या-कारकान्वयः, अन्यत्र तु लक्षितव्यक्तेः; जाति-व्यक्त्योश्च न वैशिष्ट्यावगाह्येको बोधः, किन्तु बोधद्वयं शक्ति-लक्षणाजन्यमिति। अतस्तत्रोभयोस्सत्त्वभूतत्वादुभयोरपि प्राधान्यम्। तदेव-माख्याते नामसु चानेकार्थप्रतिपादकेष्वनया स्मृत्या प्राधान्यं नियम्यते। सुबादिषु त्वने-कार्थप्रतिपादकेषु प्रधानभूतक्रियान्वयित्वात्कारकादेरेव प्राधान्यं, न तु लिङ्ग-सङ्ख्यादेः। कारकस्यैव प्रधानभूतक्रियान्वयित्वम् [ कौ० पृ० २८, ३० ] इति

१—एकविशेष्यत्वम्=भावनाविशेष्यकत्वम्। २—सम्बन्धभेदेन=करणाधिकरण-फलादीनां भावनान्वये सम्बन्धभेदेन ।

३—आनन्त्यं तेन सम्बन्धेनान्वये तत्समभिव्याहारज्ञानस्य कारणत्वाद्बोध्यम्।

सामान्येन तत्प्रकारक-तद्विशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति तादृशसमभिव्याहारज्ञानस्य कारणतेत्येवमेकस्यैव तस्योपपत्तौ, सम्बन्धाननुगमस्यादोषत्वात्।[१]यथैत्र हि संयोग-समवाय-कालिकादिसम्बन्धभेदेऽपि 'घटवद्द्रव्यमि'त्येवंविधवाक्यात्सम्बन्धसामान्यसंसर्गके घटप्रकारके मत्वर्थद्रव्यविशेष्यके शाब्दबोधे जाते, पश्चात् सम्बन्धस्य तत्त्वेन जिज्ञासायां प्रमाणान्तरेण तात्पर्येऽवधारिते यत्रैकस्मिन्नेव संसर्गे तात्पर्यमवधारितम्, तत्र तत्संसर्ग एव शाब्दबोधपर्यवसानम्। यत्रानेकेषु तात्पर्यम्, तत्रानेकेषु शाब्दबोधपर्यवसानम्। तत्र च वस्तुतस्तात्पर्यविषयीभूतस्यापि सम्बन्धस्य तत्त्वेन बोधस्य प्रमाणान्तराधीनत्वात, शाब्दबोधे च सम्बन्धत्वेनैव बोधान्न 'घटवद्द्रव्यमि'त्येवंविधसमभिव्याहारज्ञानस्य कार्य-कारणभावानन्त्यम्। पर्यवसितबोधमादायैव बाधबुद्धिप्रतिबद्ध्यप्रतिबधन्कभावः। अतएव संयोगेन 'न घटवद्द्रव्यमि'ति बुद्धिसत्त्वेऽपि 'घटवद्द्रव्यमि'ति बुद्धिर्जायमाना सम्बन्धान्तरमादाय पर्यवस्यति। संयोगविषयता तु तस्या आपाततः प्रतीता बाध्यत इति स्वानुभवसिद्धमेतत्। 'घटो नास्ती'त्यादौ वा संयोग-समवायाद्यवच्छिन्नप्रतियोगितारूपसम्बन्धभेदोऽनुसन्धेयः।

एवं विशेष्य-प्रकारभेदेऽपि तदनुगमकधर्मैक्ये न तदानन्त्यम्। न हि श्वेत-रक्तादिप्रकारभेदे, घट-पटादिरूपविशेष्यभेदे वा नामार्थयोरभेदान्वयः इति व्युत्पत्तिर्भिद्यते।

अस्तु वा एवमादिस्थले सर्वत्र तद्भेदः, तथाऽपि एककार्यकारणभावकल्पनादशायामुपस्थितस्य विशेष्यस्यैव कार्यकारणभावान्तरे विशेष्यत्वकल्पनौचित्यात्। न च विनिगमनाविरहः। द्वितीयान्तादिपदानां तावत् क्रियापदं विना निराकांक्षत्वाभावस्योभयवादिसिद्धतया क्रियाप्रतिपादकपदस्य विशेष्यप्रतिपादकत्वावश्यम्भावात्, तत्रापि धात्वर्थं प्रति, कालादिकञ्च प्रति विशेष्यभूताया भावनाया एव 'प्रधानभूतविशेष्यत्वे सम्भवति, प्रकारविशेष्यत्वस्यान्याय्यत्वादि'ति न्यायेन विशेष्यत्वोपस्थितिलाघवानुरोधेन च विशेष्यत्वकल्पनौचित्यात्। न च प्रथमान्तस्य क्रियापदसाकांक्षत्वे प्रमाणाभावः, चैत्र इत्येतान्मात्रस्य शाब्दबोधाजनकत्वेन तस्यापि साकाङ्क्षत्वात्। न च तथात्वेऽपि पण्डितादिपदसमभिव्याहारेणापि शाब्दबोधजननात् क्रियापदसाकाङ्क्षत्वे प्रमाणाभावः।

---

१—सम्बन्धाननुगमस्याऽदोषत्वादिति पूर्वेणैकवाक्यता बोध्या।

'अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ति'

इति कात्यायनस्मरणेन तस्यापि क्रियापदसाकांक्षत्वात्। भवन्तीपरः-लडन्त इत्यर्थः। न च क्रियापदान्तराध्याहारस्यापि योग्यतानुसारेणावश्यक-त्वादेतदनुशासनवैयर्थ्यम्। योग्यतासाधारण्ये वेदादौ तात्पर्यग्रहाभावे च सत्यस्त्यध्याहारनियमार्थत्वात्। प्रथमान्तमुख्यविशेष्यकत्वभ्रमनिरासार्थत्वेनैव वा सार्थक्याच्च। न चैवं तर्हि प्रथमपुरुषभिन्ने 'अहं पण्डितः, त्वं पण्डितः' इत्यादौ तत्साकांक्षत्वे प्रमाणाभावः। तत्रापि प्रातिपदिकार्थप्रकारकशाब्द-बुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन सुब्जन्योपस्थितिः कारणम्, लिङ्ग[1]संख्याव्यतिरिक्तसुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति च क्रियापद-जन्योपस्थितिः कारणमिति क्लृप्तकार्यकारणभावयोरेव प्रमाणत्वात्। अत एव प्रथमास्थलेऽपि न प्रतिपदिकोस्थितस्यैव चैत्रस्य क्रियायामन्वयः, [2]अपि तु प्रथमोपस्थितस्यैव। यदात्वभिहितकारकवाचिनी प्रथमेति मतम्, [3]तदा सुतराम्। अतस्सिद्धं लाघवानुरोधेन सर्वत्र भावनैव मुख्यविशेष्यभूतेति।

## भावनामुख्यविशेष्यत्वे शङ्का-परिहारौ

न चानुभवानुरोधेन व्युत्पत्तिनानात्वमभ्यङ्गीकृत्य योग्यतया साक्षा-त्सम्बन्धेन तत्तद्विशेष्ये तस्य तस्यान्वयो नायुक्त इति वाच्यम्। तथात्वे 'राज-पुरुषः' इत्यादावपि राज्ञस्साक्षात्स्वस्वामिभावसम्बन्धेनैवान्वयानुभवात् समास-स्थले व्युत्पत्त्यन्तरमङ्गीकृत्य राज्ञ एव भेदसम्बन्धेन [4]पुरुषान्वयोपपत्तेः पूर्वपदे सम्बन्धिलक्षणानापत्तेः। अर्धपिप्पलीत्यादौ उत्तरपदे लक्षणानापत्तेश्च। 'यजेत स्वर्गकामः' इत्यादौ स्वर्गसाधनत्वस्य यागे प्रतीयमानस्य मानसबोधविषयत्व-मङ्गीकृत्य क्लप्तव्युत्पत्तित इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इत्येवंविध-शाब्दबोधस्य भवत्सम्मतस्यानापत्तेश्च। तस्मादनुभूयमानस्य साक्षात्सम्बन्धस्य परम्परासम्बन्धघटकत्वेन, मानसबोधविषयतया वोपपत्तेर्न [5]प्रथमक्लृप्त-व्युत्पत्तिभङ्गेन व्युत्पत्त्यन्तरकल्पनं प्रमाणवत्।

---

१—लिङ्ग-संख्ययोः सुबर्थकारक एव सामानाधिकरण्येनान्वयस्वीकारात् तत्र व्यभिचारः, अतो लिङ्गसंख्याव्यतिरिक्तेति।

२—अन्यथाऽत्रैव प्रथमकार्यकारणभावे व्यभिचारात्।

३—तदा कर्तृत्वादेः प्रथमार्थत्वात् तत्र प्रातिपदिकार्थान्वयात्।

४—तत्पुरुषेति मु० पु० पा०।

५—प्रथमार्थविशेष्यतातात्पर्यग्राहकमेवेत्यत्रेति शेषः।

अतस्सिद्धं सर्वत्र वर्तमानकालस्य कृतावेवान्वयः-इति। अतस्तत्क्षणेष्वेव लटश्शक्तिः, न तु लडुच्चारणस्य शक्यतावच्छेदककोटिप्रवेशः। तस्य तदादौ बुद्धिस्थत्वस्येव शक्तिग्रहोपलक्षणत्वात्।

अथवा लडादेर्लट्त्वादिकमेव शक्यतावच्छेदकम्। तदवच्छिन्नस्य च कालिकसम्बन्धेन प्रकृतशाब्दबोधोपधायकस्ववृत्तित्वं कृतौ सम्बन्धः। कृतेः आख्यातत्वेन रूपेण लड्बोध्यत्वात्। तेन मैत्रीयप्रयोगकालीनकृतिध्वंसकाले न चैत्रलट्प्रयोगापत्तिः।

## लिडर्थः, तदन्वयप्रकारश्च

एवं लिङर्थोऽपि भूतानद्यतनत्वविशिष्टपारोक्ष्यरूपो भावनायामन्वेति। तत्र भूतत्वं लिङुच्चारणकालीनध्वंसप्रतियोगिक्षणवत्त्वम्। तच्च कालिकसम्बन्धेन कृतावन्वेति। इदञ्चान्तिमकृतावेव, तेनानेकदिनसाध्यपाकस्थलेऽप्याद्यकृतिध्वंसकाले न पपाचेति लिट्प्रयोगः। लिङुच्चारणकालीनध्वंसप्रतियोगित्वं वा। तदपि स्वरूपसम्बन्धेनान्तिमकृतावन्वेति। लिङुच्चारणकाल एव वा लिडर्थः। लिडेव वा पूर्ववत्। तस्य च स्ववृत्तिध्वंसप्रतियोगित्वादिसम्बन्धेन तस्यामन्वयः। ननाशेत्यादौ भूतत्वान्वयः पूर्ववत्। अनद्यतनत्वम्–लिङुच्चारणदिनभिन्नदिनवृत्तित्वम्। परोक्षत्वञ्च प्रयोक्तृवृत्तिसाक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम्। इदं द्वयमपि कृतावन्वेति। परन्त्वाद्यं साक्षात्सम्बन्धेन, द्वितीयं तु स्वसम्बन्धिधात्वर्थावच्छिन्नत्वसम्बन्धेन। चैत्रवृत्तिकृतेः प्रयोक्तृसाक्षात्काराविषयत्वेन, तस्यां तदभावबोधस्य व्यर्थत्वात्। बुद्ध्यतां वा स्वकृतौ प्रसिद्धस्य साक्षात्कारविषयत्वस्य तस्यामभावः। उत्तमपुरुषेऽप्यनवधानेन पारोक्ष्यं द्रष्टव्यम्। शक्तिस्त्वर्थत्रये प्रत्येकम्, विशेषणविशेष्यभावे विनिगमनाविरहात्। [1]अतएवोक्तक्षणेऽपि न विशेषणता, विनिगमनाविरहात्।

लुडर्थस्तु—पक्ता इत्यादौ अनद्यतनत्वविशिष्टं भावित्वम्। तच्च लुडुच्चारणकालीनप्रागभावप्रतियोगिक्षणवत्त्वादिकं पूर्ववदाद्यकृतावन्वेति।

लृडर्थोऽपि पक्ष्यतीत्यादौ अद्यतनानद्यतनसाधारणभविष्यत्वसामान्यं तत्रैव।

लेड् वेद एव। तदर्थो लिङर्थ एव 'समिधो यजती'त्यादौ।

---

१—उक्तदिनस्योक्तलक्षणे इति मु० पु० पा०

लोडर्थोऽपि लिङर्थ एव, प्रैषादयः, कृत्यप्रत्ययथार्थाश्च। 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' ( ३-३-१३६ ) इति सूत्रे चकारेण लोटोऽप्यनुकर्षणात्।

लङर्थस्त्वनद्यतनभूतत्वम्। अपचदित्यत्र 'भूते' इत्यनुवृत्तौ 'अनद्यतने लङ्' ( ३-२-१११ ) इति सूत्रात्।

लिङर्थस्तु पूर्वमेव निरूपितः।

लुङर्थः—अपाक्षीदित्यत्र भूतत्वमात्रम्।

लृङर्थस्तु हेतुहेतुमद्भावविशिष्टक्रियातिपत्तिः। यथा 'यदि सुवृष्टिः-अभविष्यत्, तदा सुभिक्षमभविष्यदि'ति। अत्र वृष्टि-सुभिक्षयोर्हेतुहेतुमद्भावात्। उभयोरनिष्पत्त्या च क्रियातिपत्तिः[1]। अयं भाविनि-भूते च। दृष्टो मया भवतः पुत्रोऽन्नार्थे चंक्रममाण, दृष्टश्चापरो द्विजो ब्राह्मणार्थी, यदि तेन स दृष्टः अभविष्यत्ततोऽभोक्ष्यत, न तु भुक्तवानित्यादौ भूतेऽपि प्रयोगदर्शनात्। अनयोः चार्थयोस्साक्षादेव स्वरूपसम्बन्धेन भावनान्वयः।

अत्र च सर्वत्र लकारेषु शक्ततावच्छेदकं तत्तल्लकारत्वम्, वक्ष्यमाण-रीत्या वा तत्तदादेशविशेषत्वं बोध्यम्। सर्वथा तदर्थस्य भावनायामेवान्वयः इति सिद्धम्।

## आत्मनेपदार्थस्यान्वयप्रकारः

एवमुपग्रहविशेषरूपस्यात्मनेपदादेरर्थः कर्तृगामिफलादिरूपः, सोऽपि कर्मत्वादिसम्बन्धेन तस्यामेवान्वेति, यद्यपि स्वर्गत्वादिरूपेणासौ स्वर्गकामादि-पदैरुक्तः, तथाऽपि कर्तृगामित्वादिना तदभिधानमात्मनेपदादिना नानुपपन्नम्। अस्तु वा कर्तृगामित्वादिकमेव तदर्थः, स च स्वाश्रयफलकर्मत्वादि-सम्बन्धेन कृत्यन्वयी।

## आख्यातवाच्यसंख्याया अन्वयप्रकारः

[2]एवमेकत्वादिसंख्याया अपि तिबाद्युक्तायास्सामानाधिकरण्यसम्बन्धेन तस्यामेवान्वयः, न तु साक्षात्सम्बन्धेन कर्त्रादौ, 'भावप्रधानमि'ति स्मृतिसंकोचे प्रमाणाभावात्। [3]कार्यकारणभावादिकल्पनागौरवापत्तेश्च। तत्रापि कर्त्राख्यात-

---

१—अतिपत्तिः अनिष्पत्तिः, तस्यां गम्यमानायामित्यर्थः।

२—एकत्वादेरन्यत्रान्वये भावनाप्राधान्यव्याघातात्।

३—आख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधे कारणान्तर-कल्पनापत्तेः।

स्थले स्वाश्रयसमवेतत्वसम्बन्धेन, 'चैत्रेणौदनः पच्यते' इत्यत्र हि चैत्रेण पाकेनौदनः क्रियत इति विवरणानुसारात् कृतिरेवाख्यातार्थः। पाकस्य करणत्वम्, चैत्रस्य च कर्तृत्वं प्रतीयते। आत्मनेपदेन च लक्षणया कर्म, उक्तानुशासनानुरोधात्। फलन्तु विक्लृत्त्यादि न कस्यापि पदस्यार्थः, तस्यान्यलभ्यत्वात्। अत एव फलमात्मनेपदस्यार्थः, कृतिस्तृतीयार्थ इत्यप्यपास्तम्। 'चैत्रः पचती' त्यादौ कृतावपि शक्तेरावश्यकत्वेनानेकशक्तिकल्पने गौरवात्। 'चैत्रेणौदनः क्रियते' इति तृतीयातः कृतेः पृथग्विवरणाच्च। अतश्च तत्र कृतेरेवाख्यातार्थत्वात्तस्यामेकत्वान्वयः स्वाश्रयीभूतौदनवृत्तिविक्लृत्तिरूपफलजनकपाकजनकत्वसम्बन्धेन नानुपपन्नः।

## भावाख्यातार्थनिरूपणम्

एवं भावाख्यातेऽपि 'चैत्रेण सुप्यते, गगनेन स्थीयते' इत्यादौ आख्यातेन स्वापः क्रियत इति विवरणात् भावनैवोच्यते। स्थीयत इत्यत्राप्याश्रयत्वम्। न च तत्र लक्षणायां प्रमाणाभावः, 'चैत्रो जानाती'त्यादौ विशेषणीभूतधात्वर्थान्वयस्येव 'गगनेन स्थीयते' इत्यादौ विशेषणीभूतधात्वर्थान्वयस्यापि लक्षणाबीजत्वोपपत्तेः। न च तत्र धात्वर्थविशेष्यक एव बोध, [1]भावनाप्रकारबोधत्वावच्छिन्नं प्रत्याख्यातपदज्ञानत्वेन कारणत्वस्यान्यत्र क्लृप्ततया 'समिधो यजती' त्यादौ प्रथमान्तपदाध्याहारस्येव, धात्वर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुपदज्ञानत्वेन कारणत्वस्यान्यत्र क्लृप्ततया तन्निर्वाहार्थं भावाख्यातेप्याश्रयत्वलक्षणोपपत्तेः। तत्रापि 'भावप्रधानमि'ति स्मृत्या, प्रत्ययार्थप्राधान्यस्मृत्या च भावनाया एव प्राधान्यम्। [2]अनुशासनबलाच्चाख्यातेन कर्तृ-कर्मलक्षणावद्भावरूपधात्वर्थस्यापि गुणत्वेन लक्षणा। [3]तथा गगननिष्ठं स्थितिमत् स्थित्याश्रयत्वमिति शाब्दबोधः। द्वितीयवारं स्थितिबोधस्त्वनुवादस्साधुत्वार्थः। अतः स्थीयत इत्येकत्वमपि स्वाश्रयीभूतभावरूपधात्वर्थनिरूपितत्वसम्बन्धेनाश्रयत्वादावेवान्वेति। भावप्रधानमिति स्मृतिसंकोचे प्रमाणाभावात्। न चैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः।

---

१—इदं च तार्किकमतसिद्धं न्यायवासनया दृष्टान्ततयोच्यते

२—लः कर्मणि इत्याद्यनुशासनम्

३—तथा चेति मु० पु० पा०

प्रयोगाभावसहकृतानुशासनबलेन एकवचनेनैव द्वित्वादिलक्षणात्। अत एव [1]"उष्ट्रासिका आस्यन्ते' इति महाभाष्यकारवचनात् भावेऽपि बहुवचनं क्वाचित्कमेव। एवं 'कर्मवत्कर्मणा तुल्यक्रियः' ( ३-२-८७ ) इति सूत्रात् 'पच्यते ओदनस्स्वयमेवे'त्यादौ यत्र सकर्मकधातोर्यत्कर्मकारकं तद्वृत्त्यखण्डोपाधिरूपकर्मत्वाविवक्षया कर्तृत्वविवक्षा, तत्राख्यातेन तस्यैव गुणत्वेन लक्षणयोपादानादाख्यातेन विवरणानुसारेण शक्त्यैव कृतेरुपादानात् तस्यामेव कर्तृत्वस्य स्वनिरूपकविक्लृत्तिरूपफलजनकपाकजनकत्वसम्बन्धेन, ओदनस्य च स्वनिष्ठकर्मत्वनिरूपकफलप्रयोजकत्वसम्बन्धेनान्वय इति व्यक्तं कौस्तुभे[2]।

तत्सिद्धं भावनातिरिक्ताख्यातार्थस्य सर्वस्य भावनायामेव प्रकारतेति, तस्या मुख्यविशेष्यत्वम्। धात्वर्थं प्रति तु तस्या विशेष्यत्वम्, 'प्रकृति—प्रत्ययौ प्रत्ययार्थं सह ब्रूतः, स्तयोस्तु प्रत्ययः प्राधान्येन' इति स्मृतिवशादेवाविवादम्। अत एव न तस्य प्रत्ययार्थान्तरं प्रति प्रकारता; विशेष्यगामित्वे सम्भवति, प्रकारगामित्वस्यान्याय्यत्वात्।

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये**
**भावनावादः समाप्तः**



१—इवशब्दप्रयोगमन्तरेणापि इवार्थावगतिर्भवति। तदयमर्थः-यादृशान्युष्ट्राणामनेकप्रकाराण्यासनानि, तादृशानि देवदत्तादिभिः क्रियन्ते" इति। "एवञ्चेह आसिका" इति द्वितीयाबहुवचनान्तम्, क्रियाविशेषणत्वेन कर्मत्वात्। केचिदिह कर्मणि लकारमिच्छन्ति। एवन्तु विवक्षान्तरे भवत्येव। भाष्यकारेण तु भावेऽपि लविधाने बहुवचनमुपपादितमिति बोध्यम्

अत्र च उष्ट्रासिकाःउष्ट्रासनतुल्यानि इति क्रियाविशेषणत्वात् सुखं सुप्यते इतिवत् भावाख्यातेपि द्वितीया नानुपपन्ना।

२—भावार्थाधिकरण कौस्तुभे 'एवं कर्म-कर्तृस्थले' ( पृ० ३४ ) इत्यादौ

# अथ धात्वर्थनिरूपणम्

## मण्डनमिश्रमतोपन्यास-तन्निरासौ

अथ कोऽयं धात्वर्थो नाम ? अत्र विवदन्ते बहवः । तत्र मण्डनमिश्राः तावत् विक्लृत्त्यादिरूपं फलमेव धात्वर्थः, तदनुकूलफूत्कारादिरूपो व्यापारसंघस्तु सर्वोऽपि व्यापारत्वेन प्रत्ययार्थः, फलस्य च तं प्रति प्रकारत्वमित्याहुः ।

तन्न । गमनजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेः । संयोगाख्यस्य फलस्य गमनरूपत्वेन तज्जन्यत्वाभावात् । गमनाश्रयो ग्राम इति प्रयोगापत्तेश्च । न च ल्युटो भावनावाचकत्वेन व्यापाराभिधानान्नैतादृशप्रयोगाद्यापत्तिः । गम्यर्थवान् ग्राम इति प्रयोगस्यैवमप्यापत्तेः । गम्यर्थजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेश्च । स्वत्वध्वंसाख्यस्य फलस्य यजिपदार्थत्वे तस्यैव फलभावनाकरणत्वेन स्वर्गसाधनतापत्तेः, स्थायिनस्तस्मादेव स्वर्गोत्पत्त्युपपत्तावपूर्वकल्पनानापत्तेश्च ।

## व्यापारमात्रं धात्वर्थ इति प्राचीनशाब्दिकमतम्

अतो व्यापारमात्रं धात्वर्थः, फलञ्च द्वितीयार्थ इत्यन्ये । तदपि न, व्यापारत्वेन वाच्यत्वे, सर्वधातूनां पर्यायतापत्तेः, क्रियात्वादिना विशेषरूपेण वाच्यत्वे, त्यजि-गम्योः पर्यायतापत्तेश्च । पूर्वदेशविभागानुकूला क्रिया त्यजेरर्थः । उत्तरदेशसंयोगानुकूला सैव गमेः । तद्यदि क्रियामात्रं धात्वर्थः, फलसामान्यञ्च द्वितीयार्थः, तदा तयोः पर्यायतापत्तिः ।

## धात्वर्थविषये नव्यवैयाकरणमतोपन्यासः

अत उभयं—फलम्, व्यापारश्च धात्वर्थः, उभयत्र च प्रत्येकं शक्तिः । नात ओदनादिपदार्थस्यैकदेशान्वयशङ्का । तयोश्च जन्यजनकभावस्संसर्गः । व्यापारविशेष्यकश्च बोधः । तत्रैव कर्मकारकातिरिक्तसर्वकारकाणामन्वयः, कर्मकारकस्य च फले । व्यापारश्च शरीरनिष्ठः फूत्कारादिः, आत्मनिष्ठः प्रयत्नादिश्च तत्त्वेन वाच्यः । अनुगतैकधर्मान्तरस्य निर्वक्तुमशक्तेः । न चैवं सर्वकारकव्यापाराणां तत्त्वेन वाच्यत्वे नानार्थकत्वापत्तिः, इष्टापत्तौ वा सर्वकारकाणां प्रथमान्ततापत्तिः । नानार्थत्वेऽपि यत्कारकव्यापाराणां यदा विवक्षा, तदा तेषामेव बोधस्तदादाविव बुद्धिस्थस्य । तत्कारकस्यैव च तदा प्रथमान्तत्वम्, अतएव 'स्थाली पचती'त्यादिप्रयोगोऽपि विवक्षायां संगच्छते । अतस्सर्वोऽपि व्यापारो धात्वर्थः । आख्यातार्थस्तु यगादिविकरणस्थले कर्म, शबादिविकरणस्थले कर्ता, अकर्मकधातूत्तरयगादिविकरणस्थले च भावरूपो धात्वर्थ एव ।

'लः कर्मणि' इत्याद्यनुशासनात्। सर्वेषाञ्च धात्वर्थं प्रति योग्यसम्बन्धेन गुणत्वम्। 'भावप्रधानमाख्यातमि'ति स्मृत्या भावपदवाच्यधात्वर्थस्याख्यातार्थं प्रति प्राधान्योक्तेः। प्रत्ययार्थप्राधान्यस्मृतिस्तु सुबादिविषया—इति वैयाकरणाः।

## वैयाकरणमतखण्डनम्

तदपि न। फूत्कारत्वादेः पचतीत्यतोऽप्रतीतेः, अभासमानस्य शक्यतावच्छेदकत्वायोगात्। फूत्कारादिकं विनाऽपि चैत्रनिष्ठक्रियान्तरमादाय स्वतस्सिद्धज्वालया जायमाने ओदने 'चैत्रः पचती'ति प्रयोगाच्च। तत्तद्व्यापारस्य तत्त्वेनानुभवे यागः[1], इच्छा, ज्ञानं वेति[2] वादिविप्रतिपत्त्यनुपपत्तेश्च। अतः अनुभूयमानं पाकत्वं यागत्वा[3]दिकमेव-तत्तत्फलोपधायकतावद्व्यापारवृत्ति[4]सामान्यं पच्यादिपदशक्यतावच्छेदकम्। तत्सत्त्वे पाकः[5] पाक इत्याद्यनुगतप्रतीतिः प्रमाणम्। फलोपधायकतावच्छेदकतया, शक्यतावच्छेदकतयैव वा तत्सिद्धिः। फलोपधायकव्यापारत्वादेः प्रमाणान्तरतो बोधः, न तु शाब्दबोधः। अत एव फलस्यापि न द्वितीयया बोधः, अखण्डोपाधिरूपकर्मत्वस्यैव तदर्थतायाः स्थापयिष्यमाणत्वात्। शक्ततावच्छेदकञ्च तत्तद्धातुत्वम्।

## पाकपदार्थनिर्वचनम्

पाकत्वादिकञ्च विक्लृत्तिजनकव्यापारवृत्त्येव, न तु तत्प्रयत्नादिवृत्त्यपि। 'पाकं करोमी'त्यादिना यत्नादेः पाकात्पृथग्विव्रियमाणत्वात्। न च घञादिसमभिव्याहृतधातोः फल एव शक्तिकल्पनात् पृथग्विवरणोपपत्तिः, अनेकशक्तिकल्पने व्यापारविषयकशक्तिप्रतिबन्धकल्पने वा गौरवात्। 'ग्रामो गमनवानि'ति प्रतीत्यापत्तिभयेन व्यापारप्रतीतेरप्यावश्यकत्वाच्च। अत एव विक्लृत्तिजनकव्यापारसमूह एव पाकपदार्थः, न तु तज्जनकयत्नादिरपि, तस्य पृथग्विव्रियमाणत्वेन पच्यर्थत्वाभावात्।

---

१—पाक इति मु० पु० पा०

२—देवतोद्देशेन द्रव्यत्यागो यागः, त्यागश्च स्वस्वत्वनिवृत्तिविशिष्टपरस्वलप्रकारिका इच्छा इति केचित्। अन्ये तु तादृशं ज्ञानमिति। अतो विप्रतिपत्तिः।

३—यागत्वेत्यधिको मु० पु०

४—अखण्डोपाधिरूपमिति मु० पु०

५—याग इति क्वचित्पाठः।

अत एव-तेजस्संयोगमात्रं पच्यर्थः, न तु विक्लृत्त्यनुकूलव्यापार-समान्यमित्यपि प्रत्युक्तम्। अग्निसंयोगानुकूलकृत्यभाववत्यपि भक्तविक्लृत्त्यनु-कूलावस्रावणकर्तरि पचतीति प्रयोगात्।

अत एव पाकात्पृथग्विव्रियमाणयत्नादेर्भासमानस्य भानकारणजिज्ञासायां पारिशेष्यादाख्यातार्थत्वमेव। तस्मिंश्च पाकादेः प्रकारत्वम्, प्रकृत्यर्थत्वादेव। एवञ्च प्रत्ययार्थप्राधान्यस्मृतिरपि न संकोचिता भवति।

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये धात्वर्थनिरूपणं समाप्तम्**



# अथाख्यातार्थनिरूपणम्

## पार्थसारथिमिश्राणां मतरीत्याऽऽख्यातार्थविवरणम्

अत्र च पाकाद्यनुकूलव्यापारसामान्यस्यैव प्रत्ययार्थत्वम्, 'पाकं भावयती'ति णिजन्तभूधातुना व्यापारसामान्यवाचकेन विवरणात्। यदपि पाकं करोतीति विवरणम्, तदपि करोतेर्व्यापारसमान्यवाचकत्वादनुकूलमेव। नहि करोतिर्यत्नार्थकः, तथात्वे करोतेर्यततेरिवाकर्मकतापत्तेः। फलव्यधिकरणव्यापारवाचित्वं हि धातोस्सकर्मकत्वम्। फलसमानाधिकरणव्यापारवाचित्वञ्चाकर्मकत्वम्। पचेः फलं विक्लृत्तिरोदनवृत्तिः, व्यापारश्चैत्रवृत्तिरिति व्यधिकरणत्वात्सकर्मकः। स्वापस्य फलं सुखम्, तच्च त्र एवेति द्वयोस्समानाधिकरणत्वमिति, सोऽकर्मकः। तद्यदि करोति-यतत्योरेकार्थकत्वम्, तदा एकस्यैवार्थस्य फलव्यधिकरणत्वम्, फलसमानाधिकरणत्वञ्च विरुद्धम्। अतः करोतिरपि व्यापारसामान्यवाच्येव।

अत एव 'रथो गच्छती'त्यत्र रथो गमनं करोतीति विवरणमपि संगच्छते। अतः करोति-भावयतिभ्यां विवरणादाख्यातस्यापि फलोद्देश्यकं प्रकृतधात्वर्थातिरिक्तं व्यापारसामान्यं वाच्यम्। तच्च फलं क्वचिद्धात्वर्थः, क्वचित्स्वर्गादीत्यन्यदेतत्। व्यापारसामान्यस्य च विशेषाकांक्षारूपेतिकर्तव्यताकांक्षायां प्रयाजादिवाक्यैर्विशेषसमर्पणमिति पार्थसारथिः।

## अत्रास्वरसः, यत्नस्यैवाख्यातवाच्यत्वमिति स्वमतश्च

[1]वस्तुतस्तु तत्तत्फलभेदेन, तत्तद्व्यापारभेदेन चानुगतैकलघूभूतशक्यता-

---

१—व्यापारत्वं तज्जन्यत्वे सति तज्जन्यजनकत्वम्, यत्नत्वं तु जातिविशेषः इति लाघवमिति।

अत्रेदमवधेयम्—रहस्यकृत् आख्यातस्य व्यापारसामान्यवाचित्वमिति शास्त्रदीपिकाकारस्य मतं निरस्य, वार्तिकव्याख्यातुर्भट्टसोमेश्वरस्य मतमनुवर्तमान आख्यातवाच्यः प्रयत्न इति पक्षं समर्थयामास। तस्य गमकाणि इमानि भाष्यवाक्यानि। तथाहि—'तथा यतेत, यथा किञ्चिद्भवति; इति प्रयत्नवाचिताऽऽख्यातस्य भाष्यकृता विवृता, इन्द्रियकामाधिकरणे 'जुहुयादिति शब्दस्यैतत्सामर्थ्यं यद्धोमविशिष्टं प्रयत्नमाहेत्यभिधानात्। होमे यतेतेत्यर्थस्सूचितो भवति, अस्यायमाशयः—प्रयत्नस्येच्छायोनित्वात्, निष्फले प्रयत्नो न भवति, अतस्तस्य भाव्यनिष्ठत्वमवगम्यते, धात्वर्थनिष्पत्तिमात्रेण फलवत्त्वासिद्धेर्धात्वर्थकरणकस्य प्रयत्नस्य फलसाधनत्वं न विहन्यते। अतः प्रयत्न एवाख्यातार्थः—इति।

वच्छेदकाभावात् पचति-पाके यतते, पाकं करोतीत्यादिविवरणाच्चाख्यातस्य यत्नत्वमेव शक्यतावच्छेदकम्। न च करोतिस्तदनुकूलव्यापारवाची। वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूलविजातीयवायुसंयोगरूपव्यापारवत्यपि 'नाहं स्पन्दं करोमि, अपि तु वातरोगेण मच्छरीरं स्पन्दते' इति प्रतीत्या करोतेर्यत्नार्थकत्वप्रतीतेः, यत्नत्वस्य शक्यतावच्छेदकत्वे लाघवाच्च। एवञ्च 'रथो गमनं करोतीत्यादावनुकूलव्यापारे क्वचो लक्षणेति ध्येयम्।

[1]न च भवत्यर्थकर्तृकर्मकत्वाविशेषात् करोतेर्भावयतिपर्यायत्वम्। पर्यायत्वाभावेऽपि भावयतिशक्यतावच्छेदकव्याप्ययत्नत्वशक्यतावच्छेदककत्वेनापि भवत्यर्थकर्तृकर्मकत्वोपपत्तेः।

## सकर्मकत्वाकर्मकत्वनिर्वचनम्

न च करोतेर्यत्नार्थकत्वे यततेरिवाकर्मकतापत्तिः। सत्यपि यत्नरूपैकार्थत्वे धात्वर्थतावच्छेदकफलभेदेन सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तेः। यततेर्हि चैत्रनिष्ठा क्रियैव यत्नसमानाधिकरणं फलम्। करोतेस्तु तद्व्यधिकरणमुत्पत्त्याख्यं धात्वर्थतावच्छेदकं फलम्। ततश्च यथैव पचति-गच्छत्योर्व्यापाररूपक्रियैकत्वेऽपि फलभेदादेव व्यवस्था, एवमिहापि व्यापाररूपक्रियैकत्वेऽपि फलभेदादेव सकर्मत्वाकर्मकत्वव्यवस्थोपपत्तिः। तत्फलं पुनरुभयत्रापि प्रमाणान्तरावगतमेव धात्वर्थोपलक्षणम्, धातुवाच्यमेव वेत्यन्यदेतत्।

## उक्तलक्षणखण्डनम्, लक्षणान्तरप्रणयनञ्च

वस्तुतस्तु-एतल्लक्षणस्य [2]कौस्तुभोक्तरीत्या अव्याप्त्यादिदोषदुष्टत्वात् अविवक्षाविरहविशिष्टकर्माकांक्षधातुत्वमेव सकर्मकत्वम्, तदभावश्चाकर्म-

---

तथा च न्यायसुधा—

'प्रयत्नव्यतिरिक्ताऽऽर्थीभावना तु न शक्यते। वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते॥

वोढ्रश्वादिगतं यत्नं रथादावुपचर्य वा। तिङ्वाच्यो हि करोत्यर्थः सामानाधिकरण्यतः॥

प्रयत्नश्च करोत्यर्थस्तदन्यानुपलंभनात्। न चौलूकयैः प्रयत्नस्य गुणत्वपरिभाषणात्॥

अकरोत्यर्थता शंक्या सिद्धरूपा प्रयोगतः। बुद्धीच्छाद्वेषयत्नानां शब्दज्ञैः कर्मतेष्यते॥

आचार्यैश्च प्रयत्नस्य व्यापारत्वाभिधानतः। धात्वर्थव्यतिरिक्ता प्रयत्नाख्याऽऽर्थभावना॥

यजत्यादिपराख्यातवाच्येवेति समञ्जसमि' त्यादिकं सर्वं मनसि निधायाह—वस्तुतस्त्विति।

१—अत एव 'भवत्यर्थस्य यः कर्ता करोतेः कर्म जायते' [तं० वा० पृ० ३७७] इति।

२—फलसमानाधिकरणव्यापारवाचित्वं धातोरकर्मकत्वम्। फलव्यधिकरणव्यापारवाचित्वं धातोस्सकर्मकत्वमिति प्राचीनसम्मतां धातोस्सकर्मकत्वाकर्मकत्वव्यवस्थां पराकृत्य, अविवक्षाविरहविशिष्टकर्माकांक्षधातुत्वमेव सकर्मकत्वम्, तदभावश्चाकर्मकत्वमित्येवं सकर्मकत्वाकर्मत्वयोर्लक्षणमाह रहस्यकारः। अस्योपपादनं कौस्तुभे भावार्थाधिकरणे विस्तरेण

कत्वमित्येवं कौस्तुभोक्तलक्षणं युक्तम्। अत्र चाकांक्षा समभिव्याहारात्मिका शब्दधर्मः। तेन सत्यप्यर्थैकत्वे यथा घटःकर्मत्वमित्यादावनाकांक्षत्वम्, घटमित्यादौ साकांक्षत्वम्, तथैव यततेः कर्मानाकांक्षत्वम्, करोतेश्च कर्मसाकांक्षत्वमविरुद्धम्। पच्यादेश्च स्वरूपेण कर्मसाकांक्षत्वेऽप्यविवक्षादशायामकर्मकत्वाददविवक्षाविरहेति। अत एव ओदनस्य पच्यत इति भावेऽपि प्रयोगः, आसादिधातूनाञ्च स्वरूपेणाकर्मकाणामपि मासादिकालयोगे कर्मसाकांक्षत्वात् सकर्मकत्वाच्चैत्रेणास्यते मास इति प्रयोगोपपत्तिः।

एवमेकस्यैव ग्रथधातोः चैत्रनिष्ठव्यापारवाचित्वरूपधर्मपुरस्कारेण कर्मसाकांक्षत्वात् सकर्मकत्वम्, पुष्पनिष्ठव्यापारवाचित्वेन कर्मानाकांक्षत्वादकर्मकत्वञ्च द्रष्टव्यम्।

अतो यत्नार्थकत्वेऽपि करोतेस्सकर्मकत्वाक्षतेः, तेन विव्रियमाणाख्यातस्यापि यत्नार्थकत्वम्। एवञ्च 'रथो गच्छति, जानाति, इच्छति, प्रयतते' इत्यादौ यत्र यत्नस्य बाधः, तत्रानुकूलव्यापारस्य, आश्रयत्वस्य वा लक्षणेति द्रष्टव्यम्, नश्यतीत्यादौ प्रतियोगित्वे लक्षणा। तत्सिद्धं भाक्त-मुख्यसाधारण्येन सर्वत्र धात्वर्थातिरिक्ता भावनाऽऽख्यातार्थः—इति।

## शक्ततावच्छेदकनिरूपणम्

तस्याश्च शक्ततावच्छेदकं करोतीतिविव्रियमाणाख्यातत्वम्। अतश्च भवतीत्यादौ करोतिना विवरणाभावेन भावनाभावात्, धात्वर्थ एव कारकान्वयः, परम्परासम्बन्धेनैकत्वान्वयश्चेति प्राञ्चः।

---

कृतमस्ति। तदेव पाठकानां सुखावगतयेऽधस्तादुद्ध्रियते। तथाहि—'अतो नेयं सकर्मकाकर्मकत्वयोर्निरुक्तिः। किन्त्वविवक्षाविरहविशिष्टकर्माकाङ्क्षधातुत्वं सकर्मकत्वम्। अस्ति चेदं घटं करोतीत्यादौ, कृञो नियमेन विवक्षायां सत्यां कर्मपदसाकाङ्क्षत्वात्। न तु पर्यायत्वेऽपि यततेः। आकाङ्क्षायाश्शब्दविशेषधर्मत्वेन पर्यायत्वाबाधकत्वात्। अतश्च यथैव कर्मत्वमित्येतत्पदं नाऽऽनयतिपदापेक्षम्, किन्तु समानार्थकत्वेऽपि द्वितीयैव तत्साकाङ्क्षा, तथा पर्यायत्वेऽपि कृञ एव कर्माकाङ्क्षा, न यततेः। अत्र च कर्माविवक्षायां पच्यादेरकर्मकत्वमविवक्षाविरहवैशिष्ट्याभावादव्याहतम्। आसनादीनां च कालादियोगविशिष्टानां कर्माकाङ्क्षत्वादविरुद्धं सकर्मकत्वम्।

एवं यत्रैक एव धातुरर्थान्तरे सकर्मकः, अर्थान्तरे चाऽकर्मकः, तत्राप्येकस्यैव तत्तदर्थप्रतिपादकत्वरूपधर्मपुरस्कारेण कर्मसाकाङ्क्षत्व-तदनाकाङ्क्षत्वे द्रष्टव्ये। यथा ग्रन्थधातोः ग्रथनार्थकस्य ग्रथ्यमानव्यापारवाचित्वेऽकर्मकत्वम्, ग्रथितृव्यापारवाचित्वे च सकर्मकता। अत एव यत्र कर्मद्वयसाकाङ्क्षत्वम्, तत्र द्विकर्मकत्वमपीति प्राञ्चः।

वस्तुतस्तु लाघवादाख्यातत्वमेव शक्ततावच्छेदकम्। भवतीत्यादावाश्रयत्वे लक्षणा। एवञ्च कारकाद्यन्वये न व्युत्पत्त्यन्तरकल्पनाऽपि[1]। शक्ततावच्छेदकञ्च न लत्वम्। यथाकथञ्चिदुपस्थितलकारादपि भावनोपस्थित्यापत्तेः। नाप्यादेशोपस्थापितलत्वम्, शानजाद्यादेशोपस्थापितलकारादपि शक्त्या भावनाबोधापत्तेः। नापि तिबाद्यादेशोपस्थापितलत्वम्। तथात्वे तिबादीनामनेकेषां प्रवेशात् शक्ततावच्छेदकानामननुगमेन शक्त्यनेकत्वापत्तेः। तद्वरं तिप्त्वादिनैव प्रत्येकं शक्तिः। अत एव तिप्त्वादिना लकारानुपस्थितावपि शाब्दबोधः। अन्यथाऽनेकेषु तिबादिषु तावतां शक्तिभ्रमाणां कारणत्वकल्पने गौरवात्।

एतेन—आख्यातत्वमेवैकं शक्ततावच्छेकम्। तच्च शक्यत्वसम्बन्धेनाख्यातपदवत्त्वम्। तद्वत्वञ्च तिबादिष्विति, ते शक्ताः—इत्यपास्तम्। तिबादिषु आख्यातपदवाच्यत्वाज्ञानेऽपि तिप्त्वेन पचतीत्यादौ ज्ञानेऽपि भावनाबोधात्। अतस्सिद्धमाख्यातार्थो भावनेति।

## भावनायाः प्राधान्योपसंहारः

तस्याञ्च धात्वर्थस्य प्रकारत्वेनान्वयः। प्रत्ययार्थप्राधान्यस्मृतेस्संकोचे प्रमाणाभावात्। भावप्रधानमित्यस्य आख्यातार्थेषु अनेकेषु कस्य प्राधान्यमित्यपेक्षिते, भावपदवाच्यभावनाप्राधान्यमित्यपेक्षितार्थविधायकत्वोपपत्तौ प्रत्ययार्थप्राधान्यस्मृतिसंकोचानुपपत्तेः। अतो निरुक्तस्मृतौ भावपदेन वैयाकरणपरिभाषितधात्वर्थस्य न ग्रहणमित्युक्तमेव।

न च प्रत्ययार्थप्राधान्यस्मृतेः सुबाद्यर्थलिङ्ग-संख्यादेः प्रकृत्यर्थं प्रति प्रकारतया संकोचावश्यकत्वे, यत्र करणत्वादौ प्रमाणान्तरेण प्रकृत्यर्थं प्रति

---

वस्तुतस्तु द्वितीयकर्मणो मुख्यकर्मत्वाभावेऽपि कर्मकारकसम्बन्धित्वविवक्षायामपादानादिकारकान्तरत्वाद्यविवक्षायाञ्च पारिभाषिककर्मत्वस्य व्याकरणे प्रतिपादनान्न तस्याऽऽद्यकर्मतुल्यत्वमिति द्रष्टव्यम्। [ कौ० २० भा० पृ० २३-२४ ]

१—कारकप्रकारकशाब्दबोधे करोतिविवरियमाणाख्यातजन्योपस्थितिः कारणमित्येकः, भवतीत्यादौ अन्वयबोधाय भूधातूत्तराख्यातजन्योपस्थितिः कारणमित्यपर इत्यर्थः।

अत्रेदं बोध्यम्—रहस्यकृता तार्किक-वैयाकरणमतापेक्षया स्वमते चत्वारः कार्यकारणभावाः, वक्ष्यमाणरीत्या एक एव वा लाघवादि ( पृ० १० ) त्युक्तम्, तत्रैव चत्वारः कार्यकारणभावाः प्रदर्शिताः, कालादिसाधारण्येन एककार्यकारणभावात्विलपशम्। तथाहि—निपातोपसर्ग-प्रतिपादिकातिरिक्तशब्दगम्यसुबुपात्तलिङ्ग-संख्याव्यतिरिक्तोऽर्थः। तत्प्रकारकशाब्दबुद्धित्वाच्छिन्नं प्रति लिंगानन्वयिभावनाविशेष्यतासंबन्धेनाख्यतपद—

प्राधान्यं प्रमितम्, तदनुवादमात्रतया भावनाविषयेऽपि बाधकाभावः। 'प्रत्ययार्थं सह ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन' इत्येकवचनश्रवणेन प्रत्ययार्थत्व-सामानाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यनियमात्। सुबाद्यर्थलिङ्ग-संख्या-दीनामप्राधान्येऽपि क्षतिविरहात्।

---

जन्योपस्थितिः कारणमिति। तस्यायमर्थः—अत्र निपातपदेन चादीनां ग्रहणम्, उपसर्गपदेन प्रादीनां ग्रहणम्, प्रातिपदिकं अर्थवत्सूत्रपरिभाषितमखण्डम्, तदतिरिक्ता-श्शब्दास्सुतिङादयः, कृत्वसुच्—त्वादयः, धातवश्च। तत्प्रकारकशब्दबुद्धित्वावच्छिन्नं प्रति लिङ्गानन्वय्यर्थावना निष्ठविशेष्यतासंबन्धेनाख्यातपदजन्योपस्थितिः कारणमिति। परस्परं संबन्धस्तु पार्ष्टिक एव, एवञ्च तद्व्यतिरिक्तपदार्थमात्रस्य सुबर्थकरणत्वादेः स्वनिष्ठ-करणतानिरूपकत्वसंबन्धेन लिंगानन्वयिभावनावाचिपदोपस्थापितायामन्वयः। स्वनिष्ठ-करणतानिरूपकत्वसंबन्धस्तु पार्ष्टिक एव। एवं धात्वर्थस्य, कर्तृत्व-कर्मत्वादेः, एक-त्वादेः, लङाद्यर्थस्य कालादेः, लिङाद्यर्थस्य विध्यर्थस्य सर्वस्याख्यातपदोपस्थापितायामे-वान्वय उपर्युक्तकार्यकारणभावकल्पनालाघवानुरोधेन। लिङ्गानन्वयिपदोपादानलफमिदं यत् णिजन्ताद्भूधातोरच्प्रत्ययान्तस्य स्त्रीलिंगस्य 'सत्त्वप्रधानानि नामानी'ति निरुक्तस्मृत्या प्रकृत्यर्थान्विततया भावनापदोपस्थापितायां तस्यां तेषामन्वयः प्रयोजनम्।

वस्तुतस्तु 'कृतपूर्वी कटमि'त्यत्र वक्ष्यमाणदिशा लिंगानन्वयित्वं न कारणतावच्छेदक-कोटिप्रविष्टम्, अपितु प्रत्ययजन्योपस्थितित्वम्, अतश्च वस्तुपदाभिधेयायाश्चास्यामन्वयः न कारकाणामिति।

अत्र भावनापदं फलप्रयोजककारकभिन्नव्यापारपरम्, स चाख्यातादौ कृत्यादिरूपा भावना, घञन्तादौ धात्वर्थ एव विवक्षितः, तयोः फलप्रयोजकत्वात्, अत्र कारकभिन्नेति-विशेषणोपादानस्येदं फलमभिप्रेतम्—यत् यत्र घञन्तभिन्ने आख्यातादौ धात्वर्थस्य कारकत्वं विवरणसिद्धम्, तत्र धात्वर्थे कारकान्वयवारणमेव। तत्रानन्वये 'पचत्योदनमि'-त्यस्य पाकेनौदनं करोतीति विवरणे द्वितीयान्तौदनपदस्य करोत्यर्थान्वय एव बीजमिति। विशेषस्तु षष्ठ्यर्थविचारप्रसंगे मूल एव स्पष्टीभविष्यति।

[1]'वस्तुतस्तु लिङ्ग-संख्यादीनामपि प्रत्ययार्थान्तराणां न प्रकृत्यर्थप्रकारता, अपि तु समानाभिधानश्रुत्या करणत्वादिरूपप्रत्ययार्थान्तरम्प्रत्येवेति वक्ष्यते। अतस्सिद्धं धात्वर्थस्य भावनायां प्रकारता-इति।

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये**
**आख्यातार्थनिरूपणं समाप्तम्**

---

१—अत्रेदं बोद्धव्यम्—'प्रकृति–प्रत्ययौ सहार्थं ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येने'ति स्मृत्या प्रकृत्यर्थापेक्षया प्रत्ययार्थस्य प्राधान्यं प्रतीयते। तत्रेदं विचारणीयम्—यत् यः प्रत्ययार्थः, स प्रधानं वा, यः प्रधानम्, स प्रत्ययार्थ इति द्वेधा विकल्पः। तत्राद्यः पक्षः न घटते, यः प्रत्ययार्थः, स प्रधानमित्यर्थस्वीकारे 'असति बाधके उद्देश्यविधेयभावस्थले, उद्देश्यतावच्छेदकव्यापकत्वं विधेये भासते' इति न्यायेन प्रत्ययार्थव्यापकत्वं विधेये प्राधान्ये भासेत। तच्च न संभवति, लिंग-संख्ययोः प्रत्ययार्थत्वेऽपि प्राधान्याभावात्। न द्वितीयः–यः प्रधानम्, स प्रत्ययार्थ इत्यपि न युक्तम्, खट्वेत्यादौ खट्वायाः प्राधान्येऽपि प्रत्ययार्थत्वाभावेन प्राधान्यस्य प्रत्ययार्थत्वव्यापकत्वभावात्। एवञ्च प्रत्ययार्थः प्रधानमेवेति नियमस्यासंभवेऽपि प्रत्ययार्थ एव प्रधानमिति नियमस्य संभवात्। सामान्यस्मृतिरपीयं प्रमाणान्तरानुसारात् कारकविषयैव, न तु संख्यादिविषयाऽपि। अपि च 'भावप्रधानमाख्यातम्, सत्त्वप्रधानानि नामानी'ति स्मृत्या विरोधश्शंकनीयः, भावप्रधानमित्यस्यायमर्थः—आख्यातवाच्यानां भावना-कर्तृ-संख्या-कालानामनेकेषामर्थानां मध्ये कस्य प्राधान्यमित्याकांक्षायामनया स्मृत्या भावनायाः प्राधान्यं प्रतिपाद्यते, विभक्त्युपात्तलिंग-संख्यापेक्षया सत्त्वशब्दाभिधेयस्य प्रातिपदिकार्थस्य प्राधान्यं लिंग-संख्यापेक्षया च बोध्यत इति विषयभेदान्न विरोधः। प्रकृति–प्रत्ययाविति स्मृतेर्भावप्रधानमाख्यातमिति स्मृत्या सहैकवाक्यत्वाभ्युपगमेन न कश्चिद्दोषः। एतेन भावो-धात्वर्थः प्रधानं वाच्यमस्येति व्युत्पत्त्या धात्वर्थपरतयाऽस्यास्स्मृतेरुत्प्रेक्षालंकारप्रकरणे रसगंगाधरे पण्डितराजीये व्याख्यानं निरस्तमिति वेदितव्यम्।

अथवा भावस्य प्रधानं भावप्रधानमिति षष्ठीतत्पुरुषसमासेन भावस्य—धात्वर्थस्य, आख्यातपदस्य तिङ्परत्वेन धात्वर्थापेक्षया तिङर्थः प्रधानमित्यर्थस्य स्वीकारेण प्रकृति-प्रत्यययोरिति स्मृत्यैकवाक्यतानुरोधेन न कश्चिद्दोषः–इति।

## अथ धात्वर्थस्य भावनायां प्रकारतानिरूपणम्

धात्वर्थश्च क्वचिच्छक्यार्थ एव प्रकारः। यथा 'सोमेन यजेते' त्यादौ। क्वचिल्लक्ष्यार्थ एव। यथा–'अग्नीषोमीयं पशुमालभेते' त्यादौ यागः। लक्ष्यार्थोऽपि क्वचिच्छक्यार्थयुक्तः। यथा 'पृष्ठैरुपतिष्ठते' इत्यादावात्मनेपदानुरोधेन समीपस्थितिरूपशक्यार्थविशिष्टमभिधानम्। वस्तुतस्तु 'सोमेन यजेते' त्यादौ, तत्तद्विधिष्वपि विजातीययागत्वादिनैव लक्षणेति शक्यार्थान्वयोऽत्रानुसन्धेयः[1]।

### धात्वर्थस्य भावनान्वये संसर्गविमर्शः

तस्य च कृतौ संसर्गो नानुकूलत्वम्, पचति-पाकं करोतीति पाककर्मत्वस्यैव विवरणबलेन संसर्गत्वप्रतीतेः। अत एवौदनं पचती'त्यादौ पाकेनौदनं करोतीति विवरणात् पाककरणत्वस्यापि प्रतीतेस्तस्यापि संसर्गत्वम्। अतश्च कर्मत्व-करणत्वान्यतरसंसर्गेणैव सर्वत्र भावनायां धात्वर्थस्यान्वयः। यद्यपि कृतिं प्रति पाकस्य करणत्वं बाधितम्, कृतिसाध्यत्वात्पाकादेः। तथापि स्वनिष्ठकरणत्वनिरूपकौदनोद्देश्यकत्वसम्बन्धेन पाकस्य कृतावन्वयात्, करणत्वस्यापि संसर्गघटकतया संसर्गत्वोपपत्तिः। अस्ति चौदनस्यापि कृतावुद्देश्यताख्याविषयतेति नैतादृशसंसर्गबाधः।

तत्र च यत्र विध्यश्रवणम्, तत्र द्वितीयान्तपदाद्यश्रवणे 'पचति चैत्रः' इत्यादौ धात्वर्थस्येष्टसाधनत्वाज्ञानेऽपि तस्य कर्मत्वमेव। आख्यातोपात्तभावनायाः करोत्यर्थतया तद्वदेव सकर्मकत्वनियमात्। अत एवाऽकर्मकधातुस्थले अपि आख्यातोपात्ताया भावनायाः सकर्मकत्वमेव। अत एव तस्यास्तदाकांक्षायां 'स्वास्थ्यकामः शयीते'त्यादौ कामपदोपात्तस्वास्थ्यादेरेव कर्मत्वेनान्वयः, स्वर्गकामपदेनेव लक्षणया स्वर्गादेः। धातुस्त्वकर्मक एव। अत एवात्र न भावनाकर्मणि द्वितीया। सा तु धात्वर्थकर्मण्येव।

सकर्मकधातुस्थले यथा 'व्रीहीनवहन्ती'त्यादौ, तत्र तेषां प्रथमतो भावनायां कर्मत्वेनान्वयेऽपि, पार्ष्ठिकं धात्वर्थेऽपि कर्मत्वमिति, तेषां धातूनां सकर्मकत्वोपपत्तिः। अतो भावनाया नित्यं सकर्मकत्वात् 'पचति चैत्रः' इत्यादिनिरुक्तस्थले भावनायाः कर्माकांक्षायां समानपदश्रुतया धात्वर्थस्यैव कर्मत्वम्। लौकिकवाक्यत्वाच्च तस्य वैयर्थ्येऽपि न दोषः। वेदे तु विध्यन्तरैकवाक्यत्वादिना

१—'ऋत्विग्भ्यो दक्षिणां ददाती'त्यादौ

स्तावकत्वाद्यसम्भवेन स्वाध्यायविध्यवगतप्रयोजनवत्त्वानुरोधेन लङादेरेव लेट्त्वम्, लेडर्थकत्वं वा लक्षणया परिकल्प्य, भावनायास्स्वर्गादिभाव्यान्तर-परिकल्पनया धात्वर्थस्य तत्र करणत्वेनान्वयः। विधेः प्रवर्तकत्वान्यथानुपपत्त्या तत्समभिव्याहृतायां भावनायामिष्टभाव्यकत्वावश्यम्भावात्। 'घटं पटञ्चान-ये'त्यादौ चकारं विना कर्मद्वयान्वयादर्शनात्, करोतेरिवाख्यातोपात्तभावनाया अपि एककर्मकत्वनियमेन यागादेरपि तस्यां कर्मत्वानुपपत्तेश्च।

अत एव यत्र विधिसमभिव्याहारस्य सत्त्वे, असत्त्वे वा द्वितीयादिना भाव्यान्तरं निर्दिष्टम्। यथा—'व्रीहीनवहन्यात्, ओदनं पचतीत्यादौ' तत्र धात्वर्थस्य करणत्वमेव।

यत्र तु तादृशस्थले अप्राप्तकरणान्तरसत्त्वम्, धात्वर्थस्य च प्रकरणादिना-प्राप्तिः। यथा 'गोदोहनेन पशुकामस्य प्रणयेत्, दध्नेन्द्रियकामस्य जुहुयादि'-त्यादौ, तत्राश्रयतया प्रकरणप्राप्तधात्वर्थानुवादमात्रं [1]साधुत्वसिद्ध्यर्थं धातुः। न तु तदर्थस्य करणत्वेनान्वयः, न वाऽऽश्रयत्वेन। कर्मत्वातिरिक्तस्याश्रयत्वस्य निर्वक्तुमशक्यत्वेन भावनायामिन्द्रियरूपकर्मावरुद्धायां होमस्यापि कर्मत्वेनान्वये एककर्मकत्वभङ्गापत्तेः। अत एवानेकोद्देश्यनिमित्तवाक्यभेदेऽपि एककर्मकत्व-भङ्ग एव दूषकताबीजमुक्तं कौस्तु[2]भादौ।

## भावनाया एककर्मकत्वस्वरूपविचारः

एककर्मकत्वञ्च नैककर्मत्वम्, एककर्मत्वाश्रय (कर्म) कत्वं वा, 'सर्वेभ्यो दर्शपूर्णमासौ, घटमानये'त्यादौ तदनापत्तेः। तत्र पुत्रादिवृत्तिकर्मत्वानाम्, कर्मत्वा-श्रयपुत्रादीनां वाऽनेकत्वात्। नाप्येककर्मत्वावच्छेदकत्वम्। 'सर्वेभ्यो दर्शपूर्ण-मासावि'त्यादौ, व्रीहीन् प्रोक्षती'त्यादौ च तदनापत्तेः। तत्र पुत्रत्व-पशुत्वा-दीनाम्, तदपूर्वसाधनत्वानाञ्च कर्मतावच्छेदकानां भेदात्। किन्त्वेकबोधविषय-कर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वमित्युक्तं कौस्तुभे[3]। निरुक्तस्थलेषु च

---

१—न केवला प्रकृतिः प्रयोक्तव्या, नापि प्रत्यय इति नियमात्।

२—ग्रहैकत्वाधिकरणे इति शेषः।

३—एककर्मत्वं चैकबोधजनकीभूतयावद्वृत्तिविषयकर्मकत्वम्। अतश्च सत्यामपि सर्व-शब्दस्य पुत्रत्व-पशुत्वादिना प्रत्येकशक्तौ, सत्यपि च "सर्वेभ्यो दर्शपूर्णमासावि"त्यादौ तत्तदुद्देश्यतावच्छेदकनानात्वे सर्वशब्देन तत्तच्छक्तिभिः सर्वेषां फलानां युगपद्बोधादेक-कर्मकत्वोपपत्तिः।

सर्वत्र कर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्माणामेकेन पदेनैकस्यैव समूहालम्बनात्मकस्य बोधस्य जननादेककर्मकत्वोपपत्तिः। 'अध्वर्यु-यजमानौ वाचं यच्छतः' इत्यत्र चाध्वर्युत्व-यजमानत्वयोः कर्मत्वाधिकरणतावच्छेदकयोरेक बोधविषयत्वाभावात् द्विकर्मकत्वापत्तिः। अतः पर्याप्नोति। तत्र द्वन्द्वोत्तरविभक्त्या देवतात्वादेरिव कर्मत्वादेरपि व्यासज्यवृत्तित्वावसायात्, तत्पर्याप्त्यधिकरणतावच्छेदकधर्मस्याध्वर्यु-यजमानोभयत्वस्य द्वन्द्वजन्यैकबोधविषयत्वेनैककर्मत्वोपपत्तेः। उपपादितञ्चैतत् कौस्तुभादौ।

---

न चैवमेककर्मत्वभंगभयेनानेकोद्देश्यतानङ्गीकारे फल-संस्कार्यस्थले तदापत्तावपि निमित्तस्थले तदभावात्किमिति नानेकोद्देश्यताङ्गीकारः। तत्रापि निमित्तयोर्भेदेनानुष्ठापकत्वात्, भेदेनैव भाव्याक्षेपकत्वापत्तेः। निमित्तानेकत्वे तदाक्षितभाव्यरूपकर्मानेकत्वप्रसङ्गस्य तुल्यत्वात्। न च तत्र सहितयोरेव निमित्तत्वाङ्गीकारान्नोक्तदोषापत्तिरिति वाच्यम्। साहित्यस्यापि पक्षकोटिप्रविष्टत्वेन पूर्वपदेन निमित्तविशेषणत्वानुपपत्तावर्थात्स्वातन्त्र्येण निमित्तत्वाङ्गीकारापत्तेः, तयोस्तस्य च भेदेनैव कर्माक्षेपकत्वप्रसङ्गात्।

'तत्र व्यासज्यवृत्तिधर्मकल्पना, यत्र धर्मिणोस्साहित्यविशिष्टयोस्तत्रान्वयो व्युत्पत्तिसिद्धः। यथा—'अग्निषोमीयमि'त्यत्र द्वंद्वावगतपरस्परसाहित्ययोरग्निषोमयोर्देवतात्वे, प्रकृते त्वेकत्व-ग्रहत्वयोः, तदवच्छिन्नव्यक्त्योर्वा सत्यपि पदश्रुत्या पार्ष्टिके साहित्यावगमे प्रथमतः प्रत्येकमेव कर्मत्वावगमान्न व्यासज्यवृत्तित्वकल्पनावसरः। अत एव यत्र 'हिरण्यशकलैः प्रोक्षति', अग्नये वृत्तिकाम्यः पुरोडाशमष्टाकपालमि'त्यादौ बहूनां प्रातिपदिकार्थानां पश्चान्निरूढलक्षणया साहित्यावगमेऽपि प्रथमतः प्रत्येकमेव विभक्त्यर्थान्वयान्न व्यासज्यवृत्तिकरणत्व-देवतात्वकल्पनेति ध्येयम्।

न च दम्पत्योस्साहित्यानवगमेऽपि कर्तृत्वस्य व्यासक्तत्वाङ्गीकारान्नायं नियमः इति वाच्यम्। तयोरपि 'धर्मे चार्थे च कामे च नातिचरितव्ये'ति वचनेन कर्त्तव्यमात्रे साहित्यावगमात् 'स्वर्गकामो यजेते'ति कर्तृत्ववृत्त्येकत्वबलेन तस्य व्यासक्तत्वाङ्गीकाराच्च। न हि तद्वदिह कर्मत्ववृत्त्येकत्वम्। अपि तु कर्मत्वान्वितमपि तदाश्रयवृत्ति, पदश्रुत्या एकत्वाश्रयस्य पार्ष्टिकप्रातिपदिकार्थाभेदप्रतिपादनात्। यजेतेत्यादिषु तु संख्यायाः कर्तृत्वाद्याश्रितत्वमेव, न तु शाब्द-तदाश्रयवृत्तित्वमित्युपपादितं भावनानिरूपणे।

एवं 'शुक्लं घटमानये'त्यादौ शुक्लस्य घटे अभेदान्वयात् पदद्वयेन, घटपदेनैव वा शुक्लगुणविशिष्टघटलक्षणादेककर्मत्वोपपत्तिः। एवं 'घटं पटञ्चानये'-त्यादौ इतरेतरयोगार्थचकाररूपतात्पर्यग्राहकानुरोधेन द्वितीयान्तपदद्वये लक्षणया तदुपपत्तिः। यथा चैवं सति निमित्तद्वयस्थले उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्य दूषकताबीजमेककर्मकत्वभङ्गापत्तिः, तथा कौस्तुभे व्यक्तम्[1]।

तत्सिद्धं यत्र द्वितीयादिना भाव्यान्तरं भावनायामन्वययोग्यमुपात्तम्, तत्र न धात्वर्थस्य कर्मत्वम्—इति,

## धात्वर्थस्य कर्मत्वेनाऽन्वयस्थलानि

यत्र तु तन्नोपात्तम्, धात्वर्थस्य चेष्टसाधनत्वं प्रमाणान्तरेण प्रमितम्, तत्र स्ववाक्यविधेयगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वमेव। यथा—'दध्ना जुहोती'-त्यादौ। न चैवं 'जुह्वा जुहोती'त्यादौ जुहोतेस्सकर्मकत्वम्, कर्मान्तरावश्यंभावेन भावनाया द्विकर्मकत्वापत्तिः। सकर्मकस्यापि भावाख्यात इव कर्मावि-

---

१—सिद्धान्तनिरूपणवेलायामित्यर्थः।

न चैवमपि वस्तुतः कर्मत्वस्यैकत्वात्सत्यपि वा तत्तदवच्छेदकावच्छिन्नवृत्तित्ववैशिष्ट्यरूपेण भेदे एकया द्वितीयया युगपद्बोधान्नैककर्मकत्वभङ्ग इति वाच्यम्। सत्यपि कर्मत्वैक्ये, तद्बोधैक्ये वा कर्मत्वपर्याप्त्यधिकरणानामनेकबोधविषयत्वेन तद्भङ्गावश्यम्भावात्। अत एवैकबोधजनकयावद्वृत्तिविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मत्वमेककर्मकत्वं विवक्षितम्। अत एव च 'यत्ताध्वर्युयजमानौ वाचं यच्छतः' इत्यादौ द्वन्द्वोपात्तोद्देश्यस्थले द्वन्द्वावगतसाहित्यविशिष्टानां अवैयग्र्यसंपादकवाग्यमकर्मत्वान्वयाद् देवतात्ववत् व्यासज्यवृत्तिकर्मत्वावगतेस्सत्यपि तदधिकरणानां भेदेन बोधे तेषां पर्याप्तिसंबन्धेन कर्मत्वाधिकरणत्वाभावान्नैककर्मकत्वभङ्ग इति, न तत्रानेकोद्देश्यता।

न चैवं सति तत्र समासोपात्तसाहित्यस्य विवक्षापत्तेः, अन्यतरपदार्थबोधेऽन्यतरवाग्यमानुपपत्तिः। साहित्यविशिष्टयोरध्वर्यु-यजमानयोरुद्देश्यत्वेऽपि स्वरूपे अपूर्वसाधनत्वलक्षणायां प्रत्येकवृत्त्यपूर्वसाधनत्वस्यैव लक्षणीयत्वेन तदनापत्तेः। यदि ह्यध्वर्यु-यजमानयोस्सहितयोरेककार्यजनकत्वं भवेत्, ततस्तथैव लक्षणात् स्यात् भवदुक्तानुपपत्तिः। न त्वेतदस्ति। अतस्समस्तेन प्रातिपदिकेन प्रत्येकवृत्त्यपूर्वसाधनत्वस्यैव लक्षणात्, अविवक्षाफललाभेऽपि विवक्षाङ्गीकरणं वाक्यभेदपरिहारार्थं न विरुध्यते। प्रकृते तु व्यासज्यवृत्तित्वाभावाद्युक्तो वाक्यभेद इत्युक्तमेव'। [ कौ० १७७–८२ ]

वक्षोपपत्तेः। एतादृशेऽपि विषये यदि तृतीयान्तनामधेयश्रवणम्, तदा करणत्वमेव। यथा—'समे दर्श-पूर्णमासाभ्यां यजेत, उच्चैः प्रवर्ग्येणे'त्यादौ। यत्र तु तादृशगुणश्रवणाभावः, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थमनुवादः। यथा—विद्वद्वाक्ययोः, [1]तदभावे तु 'तनूनपातं यजती'त्यादौ कर्मान्तरमेव करणत्वेनेत्याद्याकरे व्यक्तम्[2]।

यत्र तु नेष्टसाधनत्वं प्रमितम्, स्ववाक्ये चोद्भिदादिवन्न वा तृतीयान्तनामधेयश्रवणम्। यथा—सोमेन यजेत, अग्निहोत्रं जुहोती'त्यादौ, तत्र स्ववाक्ये इष्टविशेषानवगमेऽपि विधिबलेन भावनाया इष्टभाव्यकत्वावगमात्, इष्टसामान्यस्यैव तत्र भाव्यत्वमङ्गीकृत्य धात्वर्थस्य करणत्वमेव। अग्निहोत्रमित्यत्र द्वितीयाऽपि तत्र करणत्वलक्षणार्थैवेति सांप्र[3]दायिकाः। एतादृशे-विषये समानपदश्रुत्या भावनापेक्षितं कर्म धात्वर्थ एव, सुतरामग्निहोत्रमिति द्वितीयान्तश्रवणे।

न च इष्टसाधनत्वेनाज्ञातस्य कर्मत्वानुपपत्तिः, अनीप्सितकर्मत्वेन अन्वयोपपत्तेः। न च विधेः प्रवर्तकत्वव्याघातः, विध्यङ्गतेष्टभाव्यकत्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वेऽपि शाब्दबोधं प्रत्यकारणत्वात्, तदभावेऽपि होमकर्मकभावनाशाब्दज्ञानोपपत्तेः। न च भाव्यत्वेनान्वितस्य तस्य भाव्यान्तरानाकांक्षत्वात् फलवाक्येऽपि स्वर्गसाधनत्वबोधानापत्तिः। साधनत्वेनान्वितस्यार्थाद्विध्यनुरोधेन कृतिसाध्यत्वज्ञानवत्, कृतिसाध्यत्वेन बुद्धस्यापि विध्यपेक्षानुरोधेनैव इष्टविशेषसाधनतया वाक्यान्तरेण, विश्वजिन्न्यायेन वा बोधोपपत्तेः। अत उत्पत्तिवाक्ये धात्वर्थस्य कर्मत्वेनैवान्वय इति प्रभाकरोक्तमपि युक्तमिति तर्करसिकाः[4]। सर्वथा सिद्धं धात्वर्थस्य कर्मत्व-करणत्वान्यतरसंसर्गेण भावनायां प्रकारता—इति।

---

१—प्रयोजनान्तराभावे त्वित्यर्थः।

२—अभ्यासाधिकरणे ( २-२-२ )।

३—साध्याभिधायिनी द्वितीया साधनत्वमेव लक्षयतीति वदन्तः पार्थसारथिमिश्रप्रभृतयो मीमांसका इत्यर्थः।

४—तद्रसिका इत्यपि पाठः।

षष्ठीत्यर्थकात् तुल्यः, सदृशः, समो वा कृष्णेन, कृष्णस्य वेत्यत्र पक्षे षष्ठी। अत्रातुलोपमाभ्यामिति द्विवचनं छान्दसम्। अन्यथा विशेषणविभक्तित्वेन बहुवचनापत्तेः। अयञ्च—मण्डूकप्लुत्या शेषषष्ठ्या एव पाक्षिकत्वकल्पको विधिः, न तु कारकषष्ठ्याः। तुल्यशब्दस्य [1]तद्धितान्तत्वेन कारकषष्ठ्या अप्राप्तेः। तुलोपमाशब्दयोगे तु शेषषष्ठ्येव। अत एव तुलो, उपमा वा कृष्णस्य नास्तीत्यत्र शेषे तृतीयाया अविधानान्न तृतीया।

कथं तर्हि तुलां यदारोहति दन्तवासा कु. सं. ५-३५,

'स्फुटोपमं भूतिसितेन शम्भुना' मा. १—४ इत्यादिकाव्ये तुलादि शब्दयोगे तृतीयेति चेत्, तस्याः तोलनोपमानादिरूपधात्वर्थं प्रति करणत्वेनोपपत्तेः, सहयोगनिमित्तिका ज्ञेयं तृतीया। साहित्यञ्च निरूपकत्वम्, तस्य च तत्त्वेन तृतीयातो बोधः। प्रकृते तु शेषत्वार्थकतृतीयायाः पर्युदास इति, न कश्चिद्विरोधः।

अत्र[2] तुल्यार्थैरिति बहुवचननिर्देशेनैव तुल्यपर्यायाणां ग्रहणोपपत्तौ अर्थग्रहणं पदान्तरनैरपेक्ष्येण बोधकपरम्। तेन गौरिव गवयः, यथा गौः, तथा गवय इत्यादौ न षष्ठ्यादिः। [3]प्रथमोत्पत्तिप्रयोजकन्तु पूर्वमेवोक्तम्।

## चतुर्थी चाशिष्यायुष्येत्यादिसूत्रम्

एवम्—'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' (२-३-७३) इति सूत्रादायुष्याद्यार्थकशब्दयोगे आशिषि शेषे चतुर्थी, पक्षे षष्ठीत्यर्थकात् आयुष्याद्यस्मै, अस्य वा भूयादिति चतुर्थी, पक्षे षष्ठी। आयुष्यम्-चिरंजीवितम्, भद्रम्-भद्रमेव, उभयोः पर्यायत्वेऽपि आयुष्यादिपदानामर्थपरत्वख्यापनाय उभयोपादानम्।

यत्तु—व्याख्यानात् सर्वत्रार्थग्रहणोपपत्तेर्मद्र-भद्रयोरन्यतरन्न पठनी-

---

१—कर्तृकर्मणोः कृतीत्यत्र कृतीत्यनेन तद्धितान्तस्य व्यावृत्तत्वादिति भावः। तृतीयाप्रतिप्रसवफलमिदं सूत्रमिति भा० चि० पृ० १२७।

२—तुल्यार्थैरित्यादिसूत्रेऽभिहितं पक्षत्रयं शब्दकौस्तुभे, तत्त्वबोधिन्याञ्च विशदम्।

३—पृ० ४१ द्रष्टव्यम्।

यमिति [1]कैश्चिदुक्तम्। तद् भाष्यकारेण एतत्सूत्रस्याऽव्याख्यानादुपेक्षितम्। कुशलम्–निरामयम्, सुखम्–शम्। अर्थः–प्रयोजनम्। हितम्–पथ्यम्। न च 'हितयोगे चतुर्थी वक्तव्ये'ति वार्तिकादेव तत्सिद्धेः हितग्रहणवैयर्थ्यम्। अनाशिषि तेन तन्नियमेऽपि एतस्याशिषि विकल्पविधायकत्वोपपत्तेः। अत एव आयुष्यादौ अनाशिषि षष्ठ्येव। चैत्रस्य आयुष्यमस्तीति। सर्वथा षष्ठ्यर्थ सर्वोऽप्याख्यातार्थेऽन्वेतीति सिद्धम्।

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये षष्ठीविभक्त्यर्थनिरूपणं समाप्तम्**

---

१—चतुर्थ्याशिषी (२-३-७३) ति सूत्रे भट्टोजिदीक्षितेन व्याख्यानात्सर्वत्रार्था-ग्रहणम्, मद्र-भद्रयोः पर्यायत्वादन्यतरो न पठनीय इति सिद्धान्तकौमुद्यामभ्यधायि। तन्मतं निरसितुमनुवदति—'यत्तुव्याख्यानादित्यादिना ग्रन्थसन्दर्भेण तन्मतमनूद्य 'यत्वित्यादिना। निराकरोति उपेक्षितमि'त्यन्तेन। भाष्यकृता तदव्याख्यानात् तदुपेक्षणीयमिति ग्रन्थकृदाशयो बोध्यः।

# अथ सप्तमीविभक्त्यर्थनिरूपणम्

एवम्—सप्तम्यर्थोऽपि तत्रैवाप्नोति। स च 'सप्तम्यधिकरणे चेति' (२-३-३६) सूत्रानुशिष्टमधिकरणत्वम्। तच्च 'आधारोऽधिकरणमिति' (१-४-४५) सूत्रनिरुक्तम्।

## अधिकरणत्वनिर्वचनम्

ननु—अधिकरणत्वं नाम न येन केन चित्सम्बन्धेन सम्बन्धित्वम्। रूप-रसादीनामपि परस्पराश्रयत्वापत्तेः[1]। नापि स्वाधेयसम्बन्धित्वम्, आधेयत्वस्यैव निर्वक्तुमशक्तेः। तस्य स्वाश्रयसम्बन्धित्वरूपत्वेऽन्योन्याश्रयप्रसङ्गाच्च। नापि कारणत्वम्। निमित्तकारणादावतिव्याप्तेः। नापि समवायिकारणत्वम्। संयोगेन घटाद्याश्रये, जात्याश्रये, समवायाश्रये च भूतलादावव्याप्तेः।

## केषां चिन्मतेनाधिकरणत्वनिरुक्तिः

यत्तु—तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवन्मूर्तत्वं पतनवन्निरूपिताधिकरणत्वम्, पतमानपर्णादावाश्रयत्ववारणाय सत्यन्तम्। ब्रह्माण्डादिधारकसंयोगाश्रयेश्वरवारणाय मूर्तपदोपादानम्। वस्तुतस्तु ['यस्मिन् सर्वं प्रतिष्ठितम्, येनेदं धार्यते जगदि'त्यादिवचनात् ईश्वरेऽप्यस्यैवाधिकरणत्वम्। इतरथा ब्रह्माण्डादिधारकत्वस्यैवानुपपत्तेः। अतो मूर्तपदं नैव देयम्। लक्ष्यं द्रव्यनिरूपिताधिकरणत्वम्, आकाशादीनान्तु प्रमाणाभावादेव न द्रव्याधारत्वम् आधेयत्ववत्, ईश्वरे तु उक्तवचनादाधारत्ववत्, आधेयत्वेऽपि 'यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो-यमयति, बृ० उप० अन्तर्यामि ब्रा० [ईश्वरस्सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति, गी० १८-६१] त्यादिश्रुतिस्मृतिवशान्न क्षतिः। गुणादिनिरूपिताधिकरणत्वं समवायित्वम्। समवायादिनिरूपितञ्च तत्तत्स्वरूपसम्बन्धित्वमिति मतम्।

## उक्तमतनिराकरणम्

तदपि न। अननुगमात्, सप्तम्या नानार्थकत्वापत्तेश्चेति चेत्। न। अनुगताकारप्रतीत्या प्रतियोगित्वादिवत् अधिकरणत्वाधेयत्वयोश्चाखण्डोपाधित्वस्यैव स्वीकारात्। शक्यतावच्छेदकैक्यानुरोधेनापि करणत्वत्वादिवत्पदार्थान्तरकल्पने बाधकाभावाच्च। यत्र हि सखण्डपदार्थस्यैव शक्यतावच्छेदकविधया प्रतीतिरानुभविकी। न तत्र कल्पनम्। यथा विश्वादिपदेषु। यत्र तु तद्घटक-

---

१—कालिकादिसंबन्धेन संबन्धित्वात्। २—घटोऽस्तीति मु० पु०।

पदार्थाप्रतीतावपि तत्प्रतीतिः, तत्र शाब्दव्यवहारानुरोधादपि तत्कल्पनमसकृदावेदितम् ।

## तार्किकमतेन सप्तम्यर्थनिरूपणम्

तत्राऽऽधेयत्वमाधेयत्वत्वेन सप्तम्यर्थः, तत्र च निरूपकतासम्बन्धेन प्रातिपदिकार्थस्य भूतलादेरन्वयः, तस्य चानुयोगितासम्बन्धेन घटादावन्वयः । तेन 'भूतले घटः' इत्यत्र भूतलवृत्तिर्घट इत्येवं शाब्दबोध इति तार्किकाः ।

## तार्किकमतनिराकरणम्, स्वमतोपपादनञ्च

तन्न । 'सप्तम्यधिकरणे चे'त्यनुशासनविरोधात् । 'भूतले घटः, गृहे पचती'त्यादौ सर्वत्रैकरूप्येणान्वयानङ्गीकारेणाऽनेकव्युत्पत्तिकल्पनापत्तेश्च । अतोऽधिकरणत्वमेव सप्तम्यर्थः । यद्यपि संयोग-समवायाद्यवच्छिन्नाधिकरणत्वानि नाना, तथाप्यधिकरणत्वत्वस्य शक्यतावच्छेदकस्यैकत्वान्न नानार्थकत्वम् । तत्र 'भूतले घटः' इत्यत्रास्तीत्याध्याहारात् सप्तम्यर्थाधिकरणत्वस्य स्वनिरूपकघटवृत्तित्वसंसर्गेणाख्यातार्थे सत्ताश्रयत्वेऽन्वयः । भूतलनिष्ठाधिकरणत्वनिरूपकघटवृत्तिवर्तमानसत्ताश्रयत्वं घटवृत्तीति च शाब्दबोधः । न च पूर्वं घटे भूतलस्थे, सम्प्रति चाधिकरणान्तरस्थे 'भूतले घटोऽस्ती'ति प्रयोगापत्तिः, यादृशकालबोधकप्रत्ययबोध्यक्रियायां सप्तम्यर्थाधिकरणत्वान्वयः । तद्बलेन तादृशकालावच्छिन्नाधिकरणत्वस्यैव व्युत्पत्तिविशेषेण सप्तम्या बोधनात् । 'गृहे चैत्रः पचती'त्यत्र स्वनिरूपकचैत्रवृत्तित्वसंसर्गेण तस्यामेव । अत एव सर्वत्र सप्तम्यर्थस्य स्वनिरूपकौदनकर्मत्वसंसर्गेण तस्यामेव । अत एव सर्वत्र सप्तम्यर्थस्य स्वनिरूपककर्तृकर्मान्यतरद्वारकः एवाख्यातार्थान्वयः, न तु कारकान्तरद्वारकः, साक्षाद्वा । 'काश्यां ब्राह्मणेभ्यः प्रयच्छती'त्युक्ते, कर्तुरेव झटिति काशीस्थत्वप्रतीतेः । यत्र तु 'पाटलीपुत्रे स्थितो राजा काश्यां ब्राह्मणेभ्यः प्रयच्छती'त्यादौ ब्राह्मणेषु काशीवृत्तित्वप्रतीतिः, तत्र स्थितेभ्य इति पदाध्याहारेण, स्थितिकर्तृद्वारैवेति न विरोधः । अत एव 'भूभृति वृक्षात्पर्णं पतती'त्यत्र स्थितादिति पदाध्याहारं विना, न झटिति भूभृद्वृत्तित्वप्रतीतिः [1]साक्षात्तु सप्तम्यर्थस्य भावनान्वयो गृहादौ बाधित एव । चैत्रादौ तु परया कर्तृसंज्ञया बाधितः । अतस्सिद्धं कर्तृकर्मान्यतरद्वारक एव सप्तम्यर्थान्वयः–इति ।

---

१—कारकान्तरद्वारक इत्येतदुपादितम् । अथ साक्षाद्वेत्येतदुपपादयति-साक्षात्त्विति । 'गृहे चैत्रः पचती'त्यत्र चैत्रवृत्तेर्भावनाया गृहे वृत्त्यभावात् गृहनिष्ठाधि-

नन्वेवम्-कर्माविवक्षायाम्, ग्रामे गच्छति, ग्रामे गम्यते इति प्रयोगानापत्तिः, ग्रामाधिकरणत्वस्य कर्तृकर्मद्वारकत्वासम्भवात्। लक्षणयोद्देश्यत्वं तत्र सप्तम्यर्थ इति चेत्, ओदने पचतीत्यपि प्रयोगापत्तिः। अत एव धात्वर्थावच्छेदकफलद्वारक एवान्वय इत्यप्यपास्तम्, ओदनस्यापि तदापत्तेरिति चेत्। तत्रापि कर्तृद्वारकत्वस्य संभवात्। ग्रामाधिकरणकचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे संभवात् अन्यावच्छेदेन—ग्रामप्राप्तिफलकक्रियावत्यपि चैत्रे ग्रामाधिकरणत्वस्य भावित्वात् ग्रामाधिकरणचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे नानुपपत्तिः। पाककर्तुस्तु ओदनाधिकरणत्वाभावात्, न तथा प्रयोगः।

नन्वेमपि 'अग्नौ पचति' आतपे तिष्ठति, आकाशे पक्षी गच्छति, 'आकाशे तिष्ठन्नाकाशमन्तरो यमयती'त्यादिप्रयोगानुपपत्तिः, अग्न्याद्यधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकत्वायोगात्। न चाग्नौ पचतीति प्रयोगो नास्त्येवेति केषाञ्चिदुक्तं युक्तम्।

'यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते।'

इति बहुतरप्रयोगवचनात्। न हि वृत्त्यनियामकसंयुक्तसंयोगादिसम्बन्धस्याधिकरणतानिरूपकत्वं सम्भवति। अन्यथा 'आकाशे मनुष्यस्तिष्ठति, चैत्रो मैत्रात्मनि तिष्ठती'त्यादिप्रयोगापत्तेरिति चेत्।

तादृशस्थले 'गङ्गायां घोषः' इतिवदग्न्यादिपदे तत्सम्बन्धिस्थाल्यादिलक्षणया तन्निष्ठाधिकरणत्वस्य कर्तृकर्मान्यतरद्वाराऽन्वयोपपत्तेः। तेन 'अग्नौ पचती'त्यादेरग्निसंयुक्तस्थाल्यां पचति, आतपसंयुक्ते गृहे तिष्ठतीत्यर्थः।

आकाशपदेन गमनप्रतिबन्धकभूप्रदेशानवच्छिन्नप्रदेशो लक्ष्यते। यमन्तरिक्षमिति व्यवहरन्ति। सप्तम्या अवच्छेदकत्वम। विषयत्वादिवत् तस्य विभक्त्या लक्षणायामपि न दोषः। तस्योद्देश्यत्वादिवत्सप्तम्यर्थस्यापि साक्षात्सम्बन्धेनैव गमनसम्बन्धित्वम्। न हि सप्तम्यर्थमात्रे तन्नियमः। अपि तु सप्तमीवाच्य एव। तच्च प्रचुरप्रयोगादधिकरणत्वमेवेति, तत्रैवायं नियमः। धातुना च निराधारं गमनम्। तथा चोक्तविधभूप्रदेशानवच्छिन्ननिराधारगमनानुकूलकृतिः पक्षिनिष्ठेति शाब्दबोधः।

---

करणत्वनिरूपकत्वं भावनाया न भवतीति भावः। गृहादावित्यस्यानन्तरमधिकरणत्वेन विवक्षिते इति पूरणीयम्। ननु चैत्रस्य भावनाश्रयत्वात् चैत्रपदोत्तरसप्तम्यर्थस्य साक्षाद्भावनान्वयः सम्भवत्येवेत्याशङ्कायाम् भावनाश्रयस्य कर्तृसंज्ञावश्यम्भावात् तत्पदोत्तरं प्रथमाविभक्तिरेव भवेत्, न सप्तमी। तस्मात्तत्राप्यधिकरणस्य न साक्षाद्भावनान्वय इति समादधान आह चैत्रादौ तु इति।

'आकाशे तिष्ठन्ति'त्यादौ संयुक्तसंयोगावच्छिन्नसम्बन्धित्वं लक्षणया सप्तम्यर्थः। षष्ठ्यर्थस्यापि सुपां सुलुक् इत्येवं लक्षणा। तस्यापि पूर्ववद्धात्वर्थद्वारकः, कर्तृद्वारक एव वा संसर्गः।

वस्तुतस्तु आकाशस्यापि ईश्वरोपादानकत्वादुपादानत्वमेव सप्तम्यर्थः उपादानकर्तृद्वारकोऽन्वेति। आकाशे उपादानकारणत्वादनुगतः तिष्ठन्तित्यर्थः। अस्तु वा एतद्वचनबलादेवाकाशेपि[1] शब्दनिरूपिताधारत्ववत्, अन्तर्यामिनिरूपिताधारत्वमपीति, न तत्र लक्षणापि।

### अत्र पक्षेऽतिप्रसंगापादनम्, तन्निवारणञ्च

न चैवमग्नौ पचतीत्यादिप्रयोगाणां लक्षणयोपपादने, आकाशे मनुष्यः तिष्ठतीत्यादिप्रयोगापत्तिः। यत्र प्रयोगः, तत्र लक्षणयोपपादन्, न तु क्वचिल्लक्षणाङ्गीकरणमात्रेण प्रयोगापत्तिः। तथात्वे 'गङ्गायां घोषः' इत्यादौ गङ्गापदेन गङ्गासम्बन्धितीरलक्षणायास्सर्वसम्मतत्वेन भवदुक्तप्रयोगापत्तेरनिवारणात्। अतस्सिद्धं सप्तम्यर्थाधिकरणत्वस्य कर्तृ-कर्मान्यतरद्वारकोऽन्वयः—इति।

यस्तु गृहाद्बहिः स्थितेन कर्त्रा दीर्घदण्डादिना काष्ठचलनद्वारा गृहमध्ये पाककरणे गुहे पचतीति प्रयोगः, स कर्मकारकस्य तण्डुलादेः परम्परया गृहाधिकरणत्वान्नाऽनुपपन्नः।

### भूतले घटो नास्तीत्यादौ बोधविचारः

नन्वेवमपि 'भूतले घटो नास्ति, चैत्रो गृहे न पचती'त्यादौ कथं कर्तृ-कर्मान्यतरद्वारकोऽन्वयः। न हि तत्र भूतलनिष्ठाधिकरणत्वनिरूपकघटवृत्तिसत्ताश्रयत्वमभावप्रतियोगीत्येवं शाब्दबोधस्सम्भवति। भूतले घटदशायामपि तथा प्रयोगापत्तेः। उक्ताश्रयत्वस्य घटातिरिक्तवृत्त्यभावप्रतियोगित्वात्, नञा घटादिनिष्ठाभावलक्षणायामपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनः अप्रसिद्धेश्च। तद्वाक्यादनुभूयमानघटत्वावच्छिन्नप्रतियोगिताकभूतलनिष्ठाभावबोधस्याऽपलापापत्तेश्च। न ह्युक्तविधाभावोऽस्तीत्येतादृश एव बोधोऽनेन जनयितुं शक्यः। भूतलनिष्ठाधिकरणत्वस्य सप्तम्यर्थस्याभाववद्द्वारकत्वापत्त्या

---

१—इदञ्च तार्किकवासनया, भाट्टमते शब्दस्य द्रव्यस्य विभुत्वाङ्गीकारात्, इति।

कर्तृ-कर्मद्वारकत्वनियमभङ्गापत्तेः। घटस्य प्रतियोगितासंसर्गेणाऽन्वये धात्वर्थाश्रयत्वाभावेन कर्तृत्वाभावात् प्रथमानुपपत्तेश्च। भूतलवृत्तिघटप्रतियोगिताकाभावस्य कर्तृत्वोक्तौ, तस्यैकत्वात् 'घटौ न स्तः' इति द्विवचनानुपपत्तेश्च। 'घटौ नास्ती'ति प्रयोगापत्तेश्च। घट एव प्रतियोगितासम्बन्धेनाभावान्वये, अभावे च भूतलाधिकरणत्वमङ्गीकृत्य, भूतलवृत्त्यभावप्रतियोगी घटोऽस्तीति शाब्दबोधाङ्गीकारे तु, अतीते, भाविनि वा घटे[1]ऽस्तीति वर्तमानकालान्वयानुपपत्तेः, 'घटो नास्ती'ति प्रयोगानुपपत्तिः।

## भूतले घटो नास्तीत्यत्र शाब्दबोधे प्रकारान्तरम्, तन्निराकरणञ्च

एतेन—भूतलाधेयत्वाभाववान् घटोऽस्तीत्यपि शाब्दबोधः प्रत्युक्तः। अथैतद्दोषपरिहारार्थं सप्तम्यर्थाधिकरणत्वस्य निरूपकतासम्बन्धेन धात्वर्थे, कालसम्बन्धेऽन्वयः, तत्रैव लडर्थान्वयोऽपि। तस्य चाश्रयत्वे आख्यतार्थे, तस्य च प्रतियोगितासंसर्गेण नञर्थेऽभावे, तस्य च प्रथमान्तार्थे घटादाविति भूतलनिष्ठाधिकरणतानिरूपकवर्तमानकालसम्बन्धाश्रयत्वप्रतियोगिकाभाववान् घटः इति शाब्दबोधः। भावनान्वय्यभावप्रतियोगिनि च संख्यान्वयो नञ्समभिव्याहारस्थले इति मतम्।

तदपि न। सप्तम्यर्थस्य साक्षाद्धात्वर्थान्वयाव्युत्पत्तेः। अन्यथा कर्तृत्वाविवक्षायां चैत्रे पच्यत इति भावे प्रयोगापत्तेः। अत एव सप्तम्यर्थस्य धात्वर्थान्वये परम्परापदोपादानम्, कर्तृ–कर्मान्यतरद्वारकत्वोपादानं वा प्रामाणिकानाम्।

न च नञ्समभिव्याहारस्थले साक्षात्सम्बन्धेनान्वयव्युत्पत्तिकल्पनमिति केषाञ्चिदुक्तं युक्तम्। चैत्रे न पच्यत इति प्रयोगस्यैवमपि निवारयितुमशक्यत्वात्। आख्यातार्थभावनासंख्यादेर्नञ्समभिव्याहारसत्त्वेऽन्यान्वयबोधकव्युत्पत्त्यन्तरकल्पनापत्तेश्च।

एतेन-नञ्समभिव्याहारस्थले धातुना शक्यार्थाभावो लक्ष्यते, नञस्तु द्योतकत्वात्तात्पर्यग्राहकत्वमेव। सप्तम्यर्थस्य च व्युत्पत्तिविशेषकल्पनया,

---

१—घटोऽस्ति मु० पु० पा०

धात्वर्थभूताभावप्रतियोगिनि शक्यार्थे कालसम्बन्धादावन्वयः। भूतलनिष्ठाधिकरणतानिरूपकवर्तमानकालसम्बन्धप्रतियोगिकाभावाश्रयत्वं घटवृत्तीत्यादिश्च शाब्दबोधः। भावना-संख्यादेश्च न व्युत्पत्त्यन्तरकल्पनमिति केषाञ्चिदुक्तम्-अपास्तम्, कल्पनागौरवस्य तदवस्थत्वात्। 'चैत्रे न पच्यते' इति प्रयोगापत्तेश्च, 'गृहे न पचती'ति प्रयोगानापत्तेश्च, गृहस्य साक्षात् पाकाधिकरणत्वाभावात्।

अथ तत्र कर्तृद्वारकान्वयस्वीकारेऽपि 'भूतले घटो नास्ती'त्यत्रैव सप्तम्यर्थस्य धात्वर्थभूताभावप्रतियोगिकालसम्बन्धेऽन्वय इति मतम्। ततोऽस्त्याख्यधातुघटितव्युत्पत्तिकल्पनादतिगौरवम्। 'गृहे न पचती'त्यादौ च गृहाधिकरणकचैत्रवृत्तिपाकस्याऽप्रसिद्धेः, न तदभावो धातुना बोधयितुं शक्यत इति, तत्र शाब्दबोधानुपपत्तिस्तदवस्थैवेति चेत्।

## स्वमते भूतले घटो नास्तीति वाक्याद् बोधप्रकारः

न। 'इदानीं भूतले घटो नास्ती'त्यादावपि भूतलाधिकरणकघटवृत्तिसत्ताश्रयत्वं घटनिष्ठाभावप्रतियोगीत्येव शाब्दबोधात्। प्रसिद्धं हि घटस्य भूतलाधिकरणत्वं कालान्तरे। अतो न प्रतियोगिनोऽप्रसिद्धिः, न वा व्युत्पत्त्यन्तरकल्पनम्। तथाहि—सप्तम्यर्थस्य तावन्निरुक्तसंसर्गेणाख्यातार्थेऽन्वयः। प्रथमार्थस्यापि क्लृप्तसंसर्गेण तत्रैव, नञा परं लडाद्यर्थकालावच्छिन्नघटनिष्ठाभावलक्षणा। लडादिश्च तात्पर्यग्राहकमात्रम्। इदानीम्पदस्य च निपातत्वान्नञर्थान्वयेऽपि न क्षतिः। संभवति हि उक्तसत्ताश्रयत्वाभाव एव तत्कालावच्छेदेन घटे। एतस्मिन् काले एतद्भूतले घटाभावात्। अत एव भूतलवृत्तिघटाभावस्याप्यर्थादनुभूयमानस्य नाऽपलापः। यत्र त्वधिकरणे कदापि न कर्त्रादिसत्ता प्रसिद्धा, तत्रापि न कर्तुर्घटत्वादिना संसर्गघटकता, येन प्रतियोग्यप्रसिद्धिराशंक्येत, अपि तु प्रकृतक्रियाश्रयत्वेनैव। तथा च भूतलनिष्ठाधिकरणतानिरूपकवृत्ति वर्तमानसत्ताश्रयत्वं भूतलवृत्तिपरमाण्वादावेव प्रसिद्धम्। अयमेव प्रकारः पूर्वत्रानुसन्धेयः।

एवम्—लडाद्यर्थस्यापि धात्वर्थान्वयो न त्यक्तो भवति। तात्पर्यग्राहकत्वस्यापि च स्वीकारात्, तत्कालावच्छिन्नघटनिष्ठाभावप्रतियोगित्वमुक्तविधा-

श्रयत्वेऽव्याहतम्। यदि त्वस्मिन् पक्षे घटस्याख्यातार्थे साक्षात्सम्बन्धेन अनन्वयात् कर्तृत्वानुपपत्तिराशङ्क्येत, ततोऽस्त्याख्यातस्यैवोक्ताश्रयत्वप्रतियोगिकोक्तविधाभावे सप्तमी-नञुभयसमभिव्याहारे लक्षणा, नञ्पदञ्च तात्पर्यग्राहकमात्रम्। तस्मिंश्चाभावे घटस्याधेयत्वसम्बन्धेनैवान्वयान्न व्युत्पत्त्यन्तरकल्पना। उक्तविधाश्रयत्वावच्छिन्नप्रतियोगिताकाभावश्च घटे, न घटस्य भूतलवृत्तितादशायामित्यर्थात् भूतलाधिकरणकघटाभावबोधः।

## वायौ रूपं नास्तीत्यादौ बोधप्रकारः

एवम्-'वायौ रूपं नास्ति, ह्रदे वह्निर्नास्ति, जातौ सत्ता नास्ती'त्यादिप्रयोगाः अप्युपपादनीयाः। न च समवायसम्बन्धेन जातिवृत्तेरप्रसिद्ध्या समवायसम्बन्धावच्छिन्नजातिनिष्ठाधिकरणतानिरूपकवृत्तिविद्यमानकालसम्बन्धाश्रयत्वाप्रसिद्धेः, कथं तदभावस्य सत्तायां बोध इति वाच्यम्। जातावपि साक्षात्स्वरूपसम्बन्धेन वृत्तेः प्रसिद्धत्वात्, सत्तायामपि निरुक्तसामान्याभावोपपत्तेः। 'जातौ समवायेन सत्ता नास्ती'ति प्रयोगस्तु निरुक्ताश्रयत्वस्यैव [2]व्यधिकरणसम्बन्धावच्छिन्नाभावमादायोपपादनीयः। समवायेनेत्यस्य चाख्यातार्थे अभावे स्वावच्छिन्नत्वसम्बन्धेनान्वय इति, न काप्यनुपपत्तिः।

## गृहे चैत्रो न पचति इत्यादौ बोधप्रकारः

एवम्-'गृहे चैत्रो न पचती'त्यादावपि पूर्ववदेव [1]सर्वैः प्रकारैः बोधोपपादनं द्रष्टव्यम्। तत्र त्वयं विशेषः, चैत्रस्य गृहस्थत्वे पाकाश्रयत्वाभावमादाय, पाकाश्रयत्वे गृहस्थत्वाभावमादाय, उभयाभावे चोभयाभावमादाय विशिष्टाभावस्सम्पादनीयः। तत्तदभावबोध एव च तात्पर्यभेदेन फलम्।

एवम्—'स्थाल्यां तण्डुलं न पचति चैत्रः' इत्यत्रापि तण्डुलवृत्तित्वाभावे तण्डुलस्य, पाककर्मत्वाभावे पाकस्य चैत्रवृत्तित्वाभावेऽपि च तात्पर्यभेदो द्रष्टव्यः।

---

१—अस्त्विति मु. पु. पा. २ जातिनिष्ठाधिकरणतानिरूपकवृत्तिविद्यमानकालसम्बन्धाश्रयत्वनिष्ठा या समवायसम्बन्धावच्छिन्नाधिकरणतावृत्तिविद्यमानकालसम्बन्धाश्रयत्वत्वावच्छिन्ना प्रतियोगिता, तन्निरूपकाभावमादायेत्यर्थः। प्रतियोगितावच्छेदककोटौ व्यधिकरणस्य समवायसम्बन्धस्य घटकत्वादभावे व्यधिकरणसम्बन्धावच्छिन्नत्वोक्तिरिति ध्येयम्।

तात्पर्यग्राहकान्तराभावे तु स्थालीपदवैयर्थ्यभिया आद्याभाव एव, झटित्यर्थात् प्रतीतेः। अत एव—

[1]'न जीवत्पितृकः कुर्यात् तिलैः कृष्णैश्च तर्पणमि' [स्मृत्यर्थसारे] त्यादौ कृष्णत्वाभाव एव तात्पर्यम्, न तु तिलतर्पणाभावादाविति व्याचक्षते वृद्धाः[2]। [3]'नान्तरिक्षे अग्निश्चेतव्यः' इत्यादौ तु सप्तम्यर्थस्य कर्तृ-कर्मद्वारकत्वासम्भवेन प्रतियोग्यप्रसिद्ध्यापत्तेः, अगत्या नञ्-सप्तम्यन्ताभ्यामन्तरिक्षवृत्त्यभावलक्षणया तत्प्रतियोगित्वमाख्यातार्थोऽनूद्यत इति, तस्य नित्यानुवादता। तत्र सप्तम्यर्थस्य स्वातन्त्र्येणान्वयाभावादेव न व्युत्पत्त्यन्तरकल्पना। [4]अत एव अर्थवादवाक्यलक्ष्यप्राशस्त्यस्याप्यनयैव व्युत्पत्त्याऽऽख्यातार्थभावनान्वयः। 'अन्तरिक्षे घटो न पचती'त्यादौ च सप्तम्यन्त—नञ्-धातुभिरन्तरिक्षवृत्तित्वरूपव्यधिकरणधर्मावच्छिन्नप्रतियोगिताकपाकाभावो लक्ष्यते, आख्यातेन चाश्रयत्वम्। तथा चोक्तविधाभावाश्रयत्वं घटवृत्तीति शाब्दबोधः। अतोऽत्रापि न सप्तम्यर्थान्वयः इति, न कुत्रापि सप्तम्यर्थस्य कर्तृकर्मान्यतरद्वारकत्वव्यभिचारः।

यत्र तु न सप्तम्यन्तपदसमभिव्याहारः 'चैत्रो न पचती'त्यादौ, तत्र नञर्थस्य चैत्रवृत्त्यभावस्य चैत्रवृत्तिकृतौ प्रतियोगितासम्बन्धेनाऽन्वयः। अथवा वर्तमानपाकानुकूलकृत्यभावमाख्यातेन लक्षयित्वा, तस्मिन् चैत्रान्वयः इत्यादि बोध्यम्।

## चैत्रो न पचेदित्यत्र बोधप्रकारः

एवम्–लिङादिसमभिव्याहारेपि 'चैत्रो[5] न पचे (कलञ्जं भक्षये) दि'त्यादौ यत्र चैत्रवृत्तिकृतिप्रसिद्धिः, तत्र तस्यां 'न कलञ्जं भक्षयेदि'तिवदेव विध्यर्थस्य स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेणैव, नञर्थस्यापि चैत्रवृत्त्यभावस्य प्रतियोगितासंसर्गेणाऽन्वयः। अप्रसिद्धौ त्वाख्यातेन पाकानुकूलकृत्यभावं लक्षयित्वा, तस्मिन् विध्यर्थस्य प्रयोज्यत्वेन, चैत्रस्य चाधेयत्वेनाऽन्वय इति सर्वमनवद्यम्।

---

१—अस्यैवाऽर्थतोऽनुवादः, न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेत्। गृहे निषिद्धं सतिलं तर्पणं तद्बहिर्भवेत्— इति।

२—नि० सि० काराः।

३—'पृथिव्यामग्निश्चेतव्यो:, नान्तरिक्षे, न दिवी' (तै-सं-५-२-७) ति वाक्यमर्थतो प्रकृतोपयोगितया गृहीतं रहस्यकृतेति बोध्यम्।

४—पदद्वयलक्षितार्थस्याप्याख्यातार्थान्वये निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यत्वात् पृ. २९–३०३ उक्तव्युत्पत्त्यैव निर्वाहोपपत्तेः, न व्युत्पत्त्यन्तरकल्पनमिति क्वचिदधिकः पाठो दृश्यते।

५—कलञ्जं भक्षयेदिति मु० पु० पा०

## अधिकरणत्वत्रैविध्यम्

तच्चाऽधिकरणत्वं त्रिविधम्—औपश्लेषिकम्, वैषयिकम्, अभिव्यापकञ्चेति[1]। कटे आस्ते, घटे ज्ञानमस्ति, मोक्षे इच्छाऽस्ति, सर्वस्मिन्नात्मास्ति, तिलेषु तैलमस्ति। उपश्लेषः—सावच्छिन्नवृत्तित्वम्। वैषयिकम्—विषयतासम्बन्धावच्छिन्नम्। अभिव्यापकम्—अवच्छेदकावच्छेदेन वृत्तिमत्[2]। [3]"सप्तम्यधिकरणे चे'ति 'चकारात् दूरान्तिकार्थेभ्योऽपि सप्तमी। वनस्य दूरे, अन्तिके वा ग्रामः। दूरे-दूरत्वावच्छिन्नप्रदेशे। प्रतियोगित्वं षष्ठ्यर्थः। यद्यप्यत्राधिकरणत्वादेव सप्तमी प्राप्यते। तथापि द्वितीयादिविभक्तित्रयेण विशेषविहितेन बाधप्रसक्तौ प्रतिप्रसवार्थश्चकारः।

## क्तस्येन्विषयस्योपसंख्यानम्

एवम्—"क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् (१४८५) इति वार्तिकात् इन्–इन्नन्तशब्दो विषयो[4]—वर्तनभूमिर्यस्य क्तान्तस्य यदुपरीन्शब्द इत्यर्थः। तादृशक्तप्रत्ययस्य वस्तुतो यत्कर्म, तस्मिन् सप्तमी। अधीती व्याकरणे। अधीतमनेनेति विग्रहः। 'इष्टादिभ्यश्चे'ति कर्तरि इनिप्रत्ययस्य विधानात्। एतस्य च तद्धितत्वेन कृतपूर्वी कटमितिवत् द्वितीयायां प्राप्तायाम्, कर्मणि सप्तमीविधिः तद्बाधनम्, शाब्दबोधश्च तद्वदेव। कर्म चात्र मुख्यमेव, न तु मासादिः, तेन मासमधीती व्याकरणे'इत्यत्र काले द्वितीयैव।

---

१—केचन शाब्दिका 'नद्यामास्ते' इत्येतदर्थं सामीपिकं चतुर्थमिच्छन्ति।

२—अवच्छिन्नवृत्तिकान्य इत्यर्थः।

३—अत्रेदं बोध्यम्—अधिकरणं मुख्य-गौणभेदेन द्विविधम्। सर्वावयवव्यापिकृतमेव मुख्यं भवति। यथा 'तिलेषु तैलम्, सर्वेष्वात्माऽस्ति' इति। वैषयिकम्, औपश्लेषिकञ्च गौणम्। अत एव पतञ्जलिः—'स्वरितेनाधिकारः, साधकतमं करणमि'ति सूत्रयोर्भाष्यमाचक्षाणोऽधिकरणं किमिति प्रश्नमुत्थाप्य, समादधे—कृत्स्नमाधारात्मा व्याप्तो भवति, तर्हीहैव सप्तमी स्यात्, 'तिलेषु तैलमि'ति, 'गङ्गायां गावः; गङ्गायां घोषः कूपे गर्गकुलमित्य'त्र तु न स्यात्। मुख्ये कार्यसम्प्रत्ययादित्याशङ्क्य, 'स्वरितेनाधिकं कार्यं भवति' इति वचनात् 'साधकतमम्' इति तमब्ग्रहणाच्च न दोष इत्युक्त्या सूचितम्। तेन 'कटे आस्ते' इत्यत्र गौणमधिकरणम् 'मोक्षे इच्छाऽस्तीत्य'त्रापीति बोध्यम्।

४—वर्तमानेति मु० पु० पा०

एवम्-'साध्वसाधुप्रयोगे चे (१४८६) ति वार्तिकात् 'साधुः कृष्णः मातरि भवति, असाधुर्मातुले' इत्यत्र सप्तमी। अत्र[1] वैषयिकत्वादिनाऽधिकरण-सप्तम्यैव सिद्धौ, पुनर्वचनं षष्ठीनिषेधार्थम्। न च 'साधु-निपुणाभ्यामर्चायाम् सप्तम्यप्रतेः' (२-३-४३) इति वक्ष्यमाणसूत्रेणैव साधुशब्दयोगे सप्तमीसिद्धेरेतद्वार्त्तिके साधुशब्दग्रहणवैयर्थ्यम्। अनर्चायां प्रतिना योगेऽपि साधुशब्दयोगे सप्तमीत्येवं सार्थक्यात्। न चैवं 'साधुर्भृत्यो राज्ञः' इति षष्ठीप्रयोगानापत्तिः। तत्र राज्ञो भृत्यद्वारकान्वयाङ्गीकारेण साधुत्वद्वारकान्वयानङ्गीकारात्। न चैवमप्यर्चानर्चादिसाधारण्येन साधुशब्दयोगे सप्तमीविधौ वक्ष्यमाणसूत्रेऽर्चाग्रहणवैयर्थ्यम्, निपुणपदप्रयोगेऽर्चायामेव सप्तमीत्येवं सार्थक्यात्। न चैवमेतद्वार्तिकेनैव साधुशब्दयोगे सप्तमीसिद्धेः, वक्ष्यमाणसूत्रे साधुशब्दग्रहणवैयर्थ्यम्, उत्तरभाविवार्तिकेन पूर्वभाविसूत्रे वैयर्थ्यशङ्कायाः अनुक्तिसहत्वात्।

## निमित्तात्कर्मयोगे

एवम्-'निमित्तात्कर्मयोगे (१४५०) इति वार्तिकात्

'चर्मणि द्विपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः'॥ इत्यादौ सप्तमी।

'अत्र निमित्तं फलत्वादिना क्रियाप्रयोजकम्। अत एव प्रयोज्यत्वं सप्तम्यर्थः साक्षात्सम्बन्धेन क्रियान्वयी। तस्य च कर्मकारकयोगः संयोग-समवायादिर्वास्तव एव सप्तमीप्रयोजकः, न तु शाब्दबोधे ज्ञातः। अत एव तदभावे 'वेतनेन धान्यं लुनाति' इत्यादौ 'हेताववि'त्यनेन तृतीयैव। तृतीयापवादत्वेनैव चायं सप्तमीविधिः, तादर्थ्यचतुर्थ्यपवादत्वेन वा, तदा 'वेतनाय धान्यम् लुनाति' इत्यपि प्रयोगः। अत्र त्रिषूदाहरणेषु समवायाख्यः कर्मकारकसम्बन्धः, अवयवावयविभावात्। चतुर्थे तु संयोगः, सीम्नो ज्ञानार्थं पुष्कलकः-शंकुः, हतः-निखात इति तदर्थात्।

---

१—शेषषष्ठ्यपवाद इत्यर्थः।

२—'निमित्तात्कर्मयोगे' (वा १४९०) अत्रेदं बोध्यम्-अत्र वार्तिके निमित्तशब्देन फलमेव विवक्षितम्, न तु जन्य-जनकभावसम्बन्धः। अन्यथा 'जाड्येन बद्धः' इत्यत्रापि सप्तमी प्रयुज्येत, अतः फलमेव

## यस्य च भावेन भावलक्षणम्

एवम्—'यस्य च भावेन भावलक्षणम्' (२-३-३७) इति सूत्रात् यत्सम्बन्धिन्या निर्ज्ञातकालया यया क्रिययाऽनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदाख्यं लक्षणं क्रियते, तस्याः क्रियायाः कर्तुः, कर्मणो वा स्वक्रियाद्वारकेतरक्रियालक्षकत्वे विवक्षिते, तद्बोधकात् सप्तमी स्यादित्यर्थकात् 'ब्राह्मणेष्वधीयानेषु गतः, गोषु दुह्यमानासु गतः' इत्यादौ सप्तमी। अत्र कर्तृत्व-कर्मत्वान्यतरसम्बन्धेन स्वसम्बन्धिक्रियाकालकत्वं सप्तम्यर्थः, तस्य च साक्षात्सम्बन्धेनेतरक्रियायामन्वयः, पूर्वक्रियायाश्च कर्तृ-कर्मविशेषणत्वेऽपि सप्तमीलक्ष्यसम्बन्धिसंसर्गघटकत्वमपि नानुपपन्नम्। एवञ्च यत्र 'इको यणचि' पा. सू. ६-१-७७, इत्यादौ क्रिया नोपात्ता, तत्र सतीति सत्तारूपक्रियाध्याहारो बोध्यः। यत्र तु सम्बन्धिनो लक्षकत्वं न विवक्षितम्, तत्र गावो दुह्यन्ते, चैत्रो गतः, इति वाक्यद्वयप्रयोगः। अत एव तत्र पूर्वक्रियाया उत्तरक्रियोपलक्षकत्वबोधः कविकाव्यादिवन्मानस एव। अत एव समानार्थकत्वाभावात् न सप्तमीविधिस्तस्य बाधकः, अपि त्वपूर्वविधिः, कथञ्चित् षष्ठीबाधको वेति ध्येयम्।

## वार्तिकान्तरस्य वैयर्थ्योपपादनम्

यत्तु[1] "क्रियार्हाणां क्रियाकर्तृत्वादौ विवक्षिते, क्रियानर्हाणाञ्च तदभावे

---

ग्राह्यम्। अत्र योगशब्देन समवाय-संयोगौ विवक्षितौ तार्किकमतेन। भाट्ट मीमांसकमतेन तादात्म्यसम्बन्धोऽभिप्रेतः। स च न नैयायिकमतवद्भेदासहिष्णुः। अपि तु भेदसहिष्णुः। अत एव भेदाभेदवादः कौमारिलानामिति बोध्यम्, प्रकृतमनुसरामः। उदाहरणम्। यथा—'चर्मणी'त्यत्रादितस्त्रीण्युदाहरणानि सर्वैरपि समानरूपेणोपपादितानि। चतुर्थोदाहरणन्तु-सीमार्थम्-अण्डकोशार्थम्। पुष्कलकः-गन्धमृगो हत इति भट्टोजदीक्षितप्रभृतिभिर्व्याख्यातम्। हरदत्तस्तु 'अथ पुष्कलको गन्धमृगौ क्षपणकीलयोरि'ति मेदिनीकोशानुसारेण 'सीमा-ग्रामादिमर्यादा। तदर्थं पुष्फलकः,-शङ्कुः हतः—निखातः इति व्याचष्टे स्म। अतस्तदेवानुसृत्य खण्डदेवाचार्यः कौमुदीकाराभिमतमर्थं विहाय, हरदत्तसम्मतमर्थं वर्णयाम्बभूव। इदञ्च तृतीयायाः, तादर्थ्यचतुर्थ्या वाऽपवादार्थेति बोध्यम्।

विवक्षिते सप्तमी, तथा क्रियार्हाणां तदभावे, क्रियानर्हाणां च तस्मिन् विवक्षिते इत्येवं वार्तिकम्–सत्सु तरत्सु, पूज्यमानेषु वा असन्त आसते, न पूज्यन्ते वा, असत्सु तिष्ठत्सु, अपूज्यमानेषु वा सन्तस्तरन्ति, पूज्यन्ते वा, असत्सु तरत्सु, पूज्यमानेषु वा सन्तस्तिष्ठन्ति न पूज्यन्ते वा इत्यत्र सप्तमीविधायकम्, तत् 'यस्य च भावेन भावलक्षणमि'त्यनेनैव सिद्धेऽनारम्भणीयमिति केचित्।

## उक्तवार्तिकस्य विषये कैय्यटाद्युक्तसमाधानस्य निरासेन स्वमतेन सार्थक्योपपादनम्

कैय्यटादयस्तु—लक्ष्यलक्षणभावाविवक्षायां सप्तमीविधानार्थमित्याहुः। तन्न। लक्ष्यलक्षणभावातिरिक्तसम्बन्धस्याऽस्माद् वाक्यादभानेन तस्मिन्नर्थे सप्तमीविधानवैयर्थ्यापत्तेः। अतोऽर्हत्वाद्यवच्छिन्नकर्तृत्व–कर्मत्वान्यतरसम्बन्धेन स्वसम्बन्धिक्रियाकालिकत्वस्य सप्तम्यर्थत्वद्योतनायाऽनुशासनान्तरम्। तथाहि–अत्र प्रथमवाक्यद्वये औचित्यं व्यङ्ग्यम्, [4]अन्त्यद्वये चाऽनौचित्यम्। तदुपपादकत्वं निरुक्तसप्तम्यर्थस्य, तद्विशेषणीभूतार्हत्वाद्युपपादनार्थञ्च। 'तिष्ठत्स्वासते' इत्येताभ्यां तरणाभावो लक्ष्यते, सदसत्पदाभ्याञ्च वाच्य–व्यङ्ग्य-विधया क्रियार्हत्वानर्हत्वे व्यज्येते। अतश्चैतादृशलक्ष्यलक्षणभावस्य 'गोषु दुह्यमानासु गतः' इत्यादिव्यावृत्तस्याऽत्र विशिष्याऽनुभूयमानस्याऽपह्नोतुमशक्यत्वात् पृथगनुशासनम्।

## षष्ठी चानादरे

एवम्—'षष्ठी चानादरे' (२–३–३८) इति सूत्रादनादरविशिष्टलक्ष्य-लक्षणभावविवक्षायां षष्ठी–सप्तम्यौ विकल्पेन[5]। रुदति, रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रमनादृत्येत्यर्थः।

---

१—तत्त्वतस्तु व्यर्थमिदमित्यन्ये इति तत्त्वबोधिन्यामुक्तम्। तदेवाहेति बोध्यम्।

२—'अर्हाणां कर्तृत्वेऽनर्हाणामकर्तृत्वे द्वेऽनर्हाणामकर्तृत्वे तद्वैपरीत्येन च कौमुद्यामुद्धृतं वार्तिकम्।

३—तत्त्वबोधिन्यामुपन्यस्तोऽयं प्रकारः।

४—अन्तद्वये इति मु. पु. पा.

५—स्त इति शेषः।

## स्वामीश्वरेत्यादिसूत्रम्

एवम्—'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' ( २-३-३९ ) इति सूत्रादेभिस्सप्तभिर्योगे षष्ठी-सप्तम्यौ स्तः। 'गोषु गवां वा स्वामी'। निरूपकत्वं विभक्त्यर्थः, तस्य च स्वाम्यादिद्वारकोऽस्तिक्रियान्वयः।[1] समानार्थकस्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम्,। 'विरूपाणामपि समानार्थानामि'ति वार्तिकात्। वक्रदण्डावितिवत्। पदत्रयैकशेषस्तु शब्दस्वरूपपरत्वात् नाशंक्यः[2]। गवां, गोषु वा प्रसूतः। गा अनुभवितुं जात इत्यर्थः इति हरदत्तः।

## आयुक्त-कुशलाभ्यामिति सूत्रम्

एवम्—'आयुक्त-कुशलाभ्याञ्चासेवायाम्' ( २-३-४० ) इति सूत्रात् गोषु, गवां वा आयुक्तः, कुशलो वा इत्येवं षष्ठी-सप्तम्यौ। आयुक्तः—व्यापारितः। विषयसप्तम्यां पक्षे षष्ठी विधीयते। आसेवा-तदेकपरत्वम्। तदभावे तु [4]आयुक्तो गौश्शकटेन, ईषद्युक्त इत्यर्थः।

## यतश्च निर्धारणम्

एवम्—'यतश्च निर्धारणम' ( २-१-४१ ) इति सूत्राज्जाति-गुण-क्रिया-संज्ञाभिर्यतस्समुदायादेकदेशस्य पृथक्करणात्मकं निर्धारणं क्रियते, तद्वाचकात् षष्ठी-सप्तम्यौ स्तः। नृणाम्, नृषु वा ब्राह्मणः श्रेष्ठः, गवाम्, गोषु वा कृष्णा बहुक्षीरा, गच्छताम्, गच्छत्सु वा धावन् शीघ्रगामी, छात्राणाम्, छात्रेषु वा मैत्रः पटुरि'त्यादौ। अत्र विभक्त्यर्थं उक्तविधनिर्धारणम्। तत्र च निरूपकतया प्रकृत्यर्थान्वयः। तस्य च विषयीभूतब्राह्मणादिवृत्तित्वसंसर्गेण क्रियान्वयः। इदञ्च पदोपात्तस्य निर्धारणप्रतियोगितावच्छेदकस्य मनुष्यत्व-गोत्वादेर्निर्धारणविषयीभूतब्राह्मणादौ सत्त्व एव विकल्पाभिधानं बोध्यम्। यदा तु तस्य तत्राऽसत्त्वम्, तदा निर्धारणप्रतियोगिवाचकात् पञ्चम्येव।

## पञ्चमी विभक्ते

'पञ्चमी विभक्ते' ( २-३-४१ ) इति सूत्रात् 'माथुराः काशीस्थेभ्यः आढ्यतराः' इत्यादौ पञ्चमी।

## साधुनिपुणाभ्याम्

एवम्—'साधु-निपुणाभ्यामर्चायां सप्तम्यप्रतेः' ( २-३-४३ ) इति सूत्रात्

---

१—विरूपाणामित्येकशेषो न भवति स्वरूपपरत्वेन समानार्थकत्वाभावादित्यर्थः।
२—स्वाम्यर्थे इति वक्तव्ये इति शेषः। ३—स्त इति शेषः। ४—शकटे इति कौमुद्यां दृश्यते।

मातरि साधुर्निपुणो वा इत्यत्र सप्तमी । अर्चाभावे निपुणो राज्ञो भृत्य इति षष्ठी । प्रतिग्रहणमुपलक्षणम् , साधुः, निपुणो वा मातरं प्रति, परि, अनु वा पूर्वमेव च व्याख्यातप्रायमिदं सूत्रम् ।

## प्रसितोत्सुकाभ्यां तृतीया च

एवम्—'प्रसितोत्सुकाभ्यां तृतीया च' ( २-३-४४ ) इति सूत्रात् आभ्याम् योगे तृतीया स्यात् , चात् सप्तमी वेत्यर्थकात् प्रसितः, उत्सुको वा हरिणा, हरौ वेत्यत्र विकल्पेन सप्तमी । [1]प्रसितः—आसक्तः । न तु प्रकर्षेण शुक्लः । विषयत्वम् विभक्त्यर्थः, तृतीयायाः पाक्षिकत्वार्थं वचनम् ।

## नक्षत्रे च लुपि

एवम्—'नक्षत्रे च लुपि' (२-३-४५) इति सूत्रान्नक्षत्रवाचिप्रकृतेर्नक्षत्रेण युक्तः काल इत्यनेनाणप्रत्ययस्य 'लुबविशेषे' पा०सू० ४-२-४, इति लुपि कृते, नक्षत्रयुक्तकालप्रातिपदिकादधिकरणे तृतीया—सप्तम्यौ स्त इत्यर्थकात् 'मूलेन, मूले वा देवीमावाहयेदि'त्यादौ[2] । कालिकाधिकरणत्वं विभक्त्यर्थः । अणप्रत्ययाकरणेन शुद्धनक्षत्रपरत्वे 'पुष्ये शनिरि'त्यादौ सप्तम्येव, न तृतीया । कालपरत्वेऽपि अधिकरणत्वाविवक्षायामद्य पुष्यः' इत्यादौ प्रथमापि ।

## सप्तमी-पञ्चम्यौ कारकमध्ये

एवम्–'सप्तमी–पञ्चम्यौ कारकमध्ये' (२-३-७) इति सूत्रात् सजातीययोः, विजातीययोर्वा कारकयोर्मध्ये यौ कालाध्वानौ, तत्र सप्तमी—पञ्चम्यौ स्तः, इत्यर्थकात् 'अद्य भुक्त्वा अयं द्व्यहे, द्व्यहाद्वा भोक्ता । इहस्थोऽयं क्रोशे, क्रोशाद्वा लक्ष्यं विध्येदि'त्यादौ विकल्पेन सप्तमी । अत्र यद्यपि भोजनद्वयेऽप्येकः एव पुरुषः कर्तृ-कारकम् , तथाप्यद्यतनकालीनभोजनक्रियानिरूपितकर्तृत्वात् द्व्यहकालीनभोजनक्रियानिरूपितकर्तृत्वस्य भेदात् [3]सजातीयकारकद्वयमध्यत्वम् । द्वितीयोदाहरणे तु अयमिति कर्ता लक्ष्यमिति कर्म, इहेत्यधिकरणमिति विजातीयमध्यत्वम् । सर्वत्राधिकरणत्वं विभक्त्यर्थः, अपादानत्वाद्यसंभवात् । पक्षे पञ्चमीप्राप्त्यर्थो विधिः ।

---

१—उत्सुकशब्दसाहचर्यात् तत्परो प्रसितो गृह्यते रूढ्येति शेषः ।

२—'मूलेनाऽऽवाहयेद्देवीं पूर्वाषाढे समर्चयेत् ।
उत्तराषाढे बलिं दद्यात् श्रवणेन विसर्जयेदि'स्मृति ता ।

३—सजातीयेति मु० पु० पा० नास्ति ।

४—सजातीयेति ख पु० पा० ।

## अधिकशब्दयोगे पञ्चमी

एवम्—अधिकशब्देनापि योगे 'लोके, लोकाद्वाऽधिको हरिरि'त्यादौ पञ्चमी-सप्तम्यौ ज्ञेये। 'तदस्मिन्नधिकम्, यस्मादधिकमि'ति च सूत्रीयद्विविध-निर्देशात्। निरूपितत्वं विभक्त्यर्थः स्वसम्बन्ध्याधिक्याश्रयवृत्तित्वसंसर्गेण क्रियान्वयी। उपपदं तात्पर्यग्राहकम्।

## यस्मादधिकम्

एवम्—'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (२-३-९) इति सूत्रादाधिक्यार्थककर्मप्रवचनीययुक्ते सप्तमी स्यादित्यर्थकात् उपपरार्धे हरेर्गुणा इत्यादौ सप्तमी। प्रतियोगित्वं सप्तम्यर्थः स्वसम्बन्ध्याधिक्याश्रयगुण-वृत्तित्वेन क्रियान्वयी। उपपदं तात्पर्यग्राहकम्।

## अधिरीश्वरे

एवम्—'अधिरीश्वरे' (१-४-९७) इति सूत्रादैश्वर्ये अधिः कर्म-प्रवचनीयसंज्ञः, तद्युक्ते ऐश्वर्यप्रतियोगिनि, तदनुयोगिनि च 'अधिरामे भूः' अधि-भुवि रामः' इत्यादौ पर्यायेण सप्तमी। अत्र क्रमेणानुयोगित्वम्, प्रतियोगित्वञ्च सप्तम्यर्थः। स्वसम्बन्ध्यैश्वर्यसम्बन्धीतरवृत्तित्वमाख्यातार्थसंसर्गः, अधिस्तात्पर्य-ग्राहकः। रामप्रतियोगिकस्वत्वाश्रयो भूवृत्तित्वप्रतियोगी रामः' इति च फलि-तोऽर्थः। तत्सिद्धं सप्तम्यर्थः शक्यः, लाक्षणिको वा सर्वोऽपि भावनान्वयी—इति। तदेवं लिङ्ग-संख्याऽव्यतिरिक्तसुबर्थमात्रस्य सिद्धो भावनान्वयः।

नवीनानां नानामननविशदानामयमहो
सुयुक्तीनां पुञ्जैरिह विरचितः कोऽपि जगति ।
[1]महानर्कस्तर्कप्रथिततमसञ्जाततमसाम्
[2]सुधाकृन्मीमांसास्तकुमुदपूरस्य जयतु ॥

[3]यद्वद्घनानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि ।
तद्वन्मदीयेऽपि निबन्धनेऽस्मिन्नुद्वीक्ष्यतां भाट्टरहस्यसारः ॥

इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये
प्रथमः परिच्छेदः समाप्तः ।

## संपूर्णमिदं भाट्टतन्त्ररहस्यम्



१—तर्क इति मु० पु० पा०

२—सुधाकृत्—न्यायसुधाकारः भट्टसोमेश्वरः, चन्द्रश्च पक्षे । रहस्यकृत् न्यायसुधाकारमतं क्वचित्क्वचिन्निरस्यन्नपि, अन्यैर्विरोधे न्यायसुधाकृन्मतमेव पुरस्करोतीति सुधापरिशीलिनां व्यक्तमिति ।

३—माधवीये शङ्करविजये 'यद्वद्घनानाम्' इत्यादि पद्यमन्यूनानतिरेकं दृश्यते । परं 'निबन्धनेऽस्मिन्' इत्यादिस्थाने 'लघुसङ्ग्रहेऽस्मिन्नुद्वीक्ष्यतां शाङ्करवाक्यसारः' इति तत्रत्यः पाठः । अस्यार्थः—ननु भाट्टतन्त्रनिरूपितानां विषयाणां सारस्त्वदीये संग्रहे कथमवलोकनीयः, तव संग्रहस्याऽल्पत्वादिति चेत्तत्राह—यद्वदिति, यद्वत्-यथा घटानाम्-कुम्भानाम्- इभशिरसां अद्रिशृंगाणां पटलः—समुदायः । विशालः—विस्तृतोऽल्पेऽपि दर्पणे अवलोक्यते, किलेति प्रसिद्धम् । तद्वदस्मिन्—बुद्धिस्थे मदीये निबन्धने भाट्टतन्त्रस्य सारः उद्वीक्ष्यताम्—सम्यगवलोक्यतामित्यर्थः ।

शोणाचलतनूजन्मा सुब्रह्मण्याभिधो बुधः ।
रहस्ये टिप्पणीं चक्रे विषमग्रन्थिभेदिनीम् ॥



तत्तद्वादाभ्युपगतानां शाब्दिकानाम्, तार्किकाणाम्, भाट्टमीमांसकानाञ्च प्रतितन्त्रसिद्धान्तानां सम्यगवबोधाय तत्तद्वादिनामभिमता असाधारणाः केचन मौलिकसिद्धान्ताः सारिण्या निर्दिश्यन्ते, यया शाब्दिक-तार्किक-मीमांसकानां सम्मताः सिद्धान्ताः स्फुटमवगम्येरन्। तथाहि—

शाब्दिकानां सिद्धान्ता अधस्तान्निर्दिश्यन्ते। यथा —

१—धात्वर्थमुख्यविशेष्यकश्शाब्दबोधः।

२—सकर्मकाणाम्, अकर्मकाणाञ्च धातूनां फलम्, व्यापारश्चेत्युभयार्थता।

३—[1]कर्तृकर्मादयो धर्मिणः प्रत्ययवाच्याः इति प्राचीनाः। नव्यास्तु कर्मत्वादिकमिति।

४—लडाद्यर्थः कालो धात्वर्थे अन्वेति।

५—समासे शक्तिः एकार्थीभावसामर्थ्यम्।

६—बोधकत्वं शक्तिः।

७—साधव इवापभ्रंशा अपि वाचकाः[2]।

८—शक्त्यतिरिक्ता लक्षणादिर्वृत्तिर्नास्ति प्राचीनमते, नव्यमते तु शक्ति-लक्षणा-व्यञ्जना चेति तिस्रो वृत्तयः।

९—प्रादीनाम्, चादीनाञ्च द्योतकत्व-वाचकत्वरूपं वैषम्यं नास्ति।

१०—स्फोटात्मकश्शब्दः, वर्णाभिव्यंग्यो वाक्यस्फोट इति निष्कर्षः—इति।

एवं तार्किकाणामपि सिद्धान्ता अधस्तादुद्ध्रियन्ते। यथा—

१—प्रायशः प्रथमान्तार्थमुख्यविशेष्यकः शाब्दबोधः।

२—सकर्मकाणां धातूनां फल-व्यापारबोधकत्वम्, नाकर्मकधातूनाम्।

३—कर्तृत्व-कर्मत्वादिर्धर्म एव प्रत्ययवाच्यः, न धर्मी।

४—आख्यातार्थः कालः आख्यातार्थकृतावन्वेति, यत्राख्यातात्कृतेर्बोधीः न भवति, जानाति, इच्छति, नश्यतीत्यादौ धात्वर्थेऽन्वेति।

---

१—आश्रयश्शक्तिरेव वेतिवचनात्।

२—सामानायामर्थावगतावित्यादि भाष्ये।

५—समासे शक्तिर्नास्ति ।

६—ईश्वरसंकेतश्शक्तिः, संकेतमात्रं वा ।

७—लक्षणाऽपि वृत्तिः ।

८—अपभ्रंशा न वाचकाः, शक्तिभ्रमात्तेभ्योऽर्थप्रतीतिः ।

९—स्फोटो नांगीक्रियते ।

१०—प्रादयो द्योतकाः, चादयो वाचकाः—इति ।

**अथ भाट्टमीमांसकानां सिद्धान्तास्संगृह्यन्ते । यथा—**

१—आख्यातावाच्यार्थभावनामुख्यविशेष्यकः शाब्दबोधः ।

२—आख्यातार्थः काल-संख्यादिकमपि भावनायामेवान्वेति ।

३—धात्वर्थस्यापि कारकत्वम्, क्वचित्तस्य क्रियात्वव्यपदेशः लाक्षणिकः, गौणो वा ।

४—आख्यातवाच्या भावना, कर्तरि निरूढलक्षणा ।

५—समासे शक्तिर्नास्ति, बहुव्रीहौ परं शक्तिरिति कौमारिलामतनुगाः केचित् ।

६—कर्तृत्व-कर्मत्वादिकमखण्डोपाधिरूपम्, लाघवात् ।

७—प्रत्याय्य-प्रत्यायकभावरूपाऽभिधा शक्तिः, सा च पदार्थान्तरम् ।

८—शक्तिः, लक्षणा, गौणी चेति त्रिस्रो वृत्तयः, व्यञ्जना नास्ति ।

९—तत्तत्फलावच्छिन्नव्यापारवृत्तिपाकत्व-यागत्वादिकं तत्तद्धातुशक्यतावच्छेदकम् ।

१०—प्रादीनाम्, चादीनाञ्च द्योतकत्वम्, वाचकत्वं वेत्यत्र नाग्रहः ।

११—वर्णात्मकं पदम्, पदात्मकं वाक्यम्, न तु स्फोटः,

## भाट्टतन्त्ररहस्ये समुद्धृतानां ग्रन्थकाराणाम्, ग्रन्थानां च सूची

| ग्रन्थकाराः | ग्रन्थाः |
|---|---|
| १ आपस्तम्बः | आपस्तम्बगृह्यसूत्रम् |
| २ कात्यायनः ७९ | वार्तिकम् |
| ३ [1]काशिकाकारः ११५ | काशिका |
| ४ कुमारिलभट्ट ९४. ९५ | भट्ट [ तन्त्र वार्तिके ] |
| ५ कैय्यटः ११९ | प्रदीपः |
| खण्डदेवः१७-२४-३१-४९-६२-६८-६९-११२-१३२ | मीमांसाकौस्तुभः |
| ६ गौतमः | न्यायदर्शनम् |
| ७ जैमिनिः ३४ | मीमांसादर्शनम् |
| ८ नवीनतार्किकाः ४२ | शब्दशक्तिप्रकाशिका |
| पाणिनिः ७५ | सूत्राणि |
| ९ पार्थसारथिः १६-९५ | शास्त्रदीपिका |
| १० प्राभाकराः | बृहती |
| ११ मण्डनमिश्राः १६, ५८ | विधिविवेकः |
| १२ न्यायसुधाकारः १७-९५-१११ | न्यायसुधा |
| १३ भट्टिः | भट्टिकाव्यम् |
| १४ वृत्तिकारः १२० | वृत्तिः |
| १५ वैयाकरणाः १० ११६ १२९ | मनोरमा |
| १६ शबरस्वामी | मीमांसाभाष्यम् |
| १७ शिरोमणिः | दीधितिः |
| १८ हरदत्तः १२१-१४६-१६९ | पदमञ्जरी |
| १९ हरिः ११९-१२१-१३०-१६८ | वाक्यपदीयम् |

---

१—काशिकाकार-वृत्तिकारयोरेकत्वं बोध्यम् ।

## भाट्ट-प्राभाकर-शाब्दिक-तार्किकाभिमतानां शाब्दबोधोपयोगिनां विषयाणां सूचनी

| भाट्टमीमांसकाः | प्राभाकरमीमांसकाः | वैयाकरणाः | तार्किकाः |
|---|---|---|---|
| | | **शाब्दबोधे करणम् १** | |
| १—पदैरभिहिताः पदार्थाः शाब्दबोधे करणम् | अन्विताभिधायीनि पदानि | स्फोटः | पदज्ञानं करणम् |
| | | **शक्तिः २** | |
| २—पद-पदार्थयोः औत्पत्तिकः सम्बन्धः प्रत्याय्य-प्रत्यायक-भावरूपः | पदार्थबोधे सामर्थ्यम् शब्दगत मनादिबोधकत्वम्, स्वार्थेजातौ स्मारिका, अन्वितेऽर्थे आनुभाविकी शक्तिः | शब्दगतमनादि बोध-कत्वम् | ईश्वरसंकेतः शक्तिः, संकेतः,प रिभाषा, इच्छा वा |
| | | **एकार्थीभावसामर्थ्यम् ३** | |
| ३—वाक्ये शक्तिर्नास्ति, वाक्ये एकार्थीभावलक्षणं सामर्थ्यं न किन्तु व्यपेक्षासामर्थ्यमेव | ,, | समासे अतिरिक्ताशक्तिः, या एकार्थीभावलक्षण-मित्यभिधीयते | शक्तिः पदमात्रे, न तु वाक्ये पदसमुदयरूपे |
| | | **लक्षणा ४** | |
| ४—बोध्यसंबन्धो लक्षणा, | वाक्यार्थान्वयिपदार्थगत- | लक्षणा नास्ति सर्वे सर्वार्थ- | शक्यसम्बन्धो |

| भाट्टमीमांसकाः | प्रभाकरमीमांसकाः | वैयाकरणाः | तार्किकाः |
|---|---|---|---|
| १२ पदे वाक्ये च लक्षणा, वाक्यार्थो लक्ष्यः पदार्थश्च | संबन्धः पदे, वाक्ये च सा | वाचकाः, प्रयोगप्राचुर्य-तदभावाभ्याम् शक्तिरिति, लक्षणेति च व्यवहारः । | लक्षणा, सा च पदमात्रवृत्तिः |
| | | **व्यञ्जना ५** | |
| ५–नास्ति | ,, | प्राचीनमते नास्ति, व्यंजना शब्द-तदर्थादिसाधारणः व्यापारविशेषः इति नव्यवैयाकरणो नागेशभट्टो मञ्जूषायाम्, | शक्तिवादमाधवीये तस्य निरासः, आधुनिकास्तु केचिदिच्छन्ति । |
| | | **सुबर्थः ६** | |
| ६–कर्मत्वादिकमखण्डम् सुबर्थः, तत्रैव संख्या अन्वेति, सुबर्थस्याख्या-तार्थभावनायामन्वयः | ,, | आश्रयोऽवधिरुद्देश्यः-संबन्धश्च सुबर्थो भेदेन प्रकृत्यर्थेऽन्वेति, स धात्वर्थेऽन्वेति, शक्तिपक्षे तु आश्रयत्वादिकं सुबर्थः, | कर्मत्वमाधेयत्वपर्यवसितम् भेदघटितं द्वितीयार्थः साक्षात्संबन्धेन धात्वर्थे व्यापारे फले चान्वेति सुबर्थसंख्या प्रकृत्यर्थे विशेषणम्, |
| | | **धात्वर्थः ७** | |
| ६–धात्वर्थः फला-वच्छिन्नव्यापारः, न तत्रान्तर्भवति कृतिः, | विषयः करणञ्च | फलम्, व्यापारश्च धात्वर्थः | सकर्मकधातूनां फला-वच्छिन्नो व्यापारः, फलं व्यापारश्चा कर्मकस्थले |

| भाट्टमीमांसकाः | प्राभाकरमीमांसकाः | वैयाकरणाः | तार्किकाः |
|---|---|---|---|
| | | **आख्यातार्थः ८** | |
| ७–तिङर्थो भावना धात्वर्थस्यापि मुख्य-विशेष्यभूता, निरूढ-लक्षणयाऽर्ता तस्यामेव विशेषणम्, संख्यादिकमपि। | कार्यवाचिनामेव कृतिवाचित्वमिति सिद्धान्तात् संख्यादिरर्थः | धात्वर्थे विशेषणम्, अखण्डं कर्तृत्वकर्मत्वादिमानिति नव्याः, आश्रयादिरिति प्राञ्चः | कृतिः, क्वचित् आश्रयत्वम्, प्रतियोगित्वञ्च लक्षणयेति |
| | | **लकारार्थः कालः ९** | |
| ८–काल आख्यातवाच्यः भावनायामन्वेति | ,, | लकारार्थः कालो धात्वर्थे-ऽन्वेति | कृतावन्वेति, जानाति गच्छतीति स्थले धात्वर्थेऽन्वेति |
| | | **विध्यर्थः १०** | |
| शाब्द्भावना-प्रवर्तना, प्रवर्तना-प्रवृत्त्यनुकूल-व्यापारः | कार्यम्, नियोगो वा | इष्टसाधनत्वम् तत् वाच्यम्, द्योत्यं वेति कल्पद्वयम्। प्रवर्तनेति सुवचमिति कौमुदीकारः | ३ इष्टसाधनत्वम्, कृतिसाध्यत्वम्, बलवद्-निष्टाननुबन्धित्वञ्च |
| | | **‘शाब्दबोधे मुख्यविशेष्यम्’ ११** | |
| आख्यातार्थः आर्थभावना कृतिः रहस्यानुसारेण | कार्यं विध्यर्थः | धात्वर्थो व्यापारः, तत्रायं विशेषः-कर्त्राख्याते व्यापारः, कर्माख्याते फलमिति च | प्रथमान्तार्थस्य मुख्य-विशेष्यत्वम्, क्वचिन्निपातार्थः, भावाख्याते धात्वर्थः, क्वचिदाख्यातार्थश्च प्रथमान्तपदासमभिव्याहारे। |

अत्र शाब्दबोधविषये मतभेदेन शाब्दबोधप्रकारमवजिगमीषूणाम् छात्राणां सौविध्याय स्थालीपुलाकन्यायेन तत्तद्वादिसम्मतः शाब्दबोधप्रकारः संक्षेपेण निर्दिश्यते, अस्य परिशीलनेन शाब्दबोधविषये जिज्ञासवः स्थलान्तरेष्वपि स्वबुद्धिकौशलेन शाब्दबोधं वर्णयितुं प्रभवेयुरिति ।

## अथ शाब्दिकमते चैत्रः तण्डुलं पचतीत्यत्र बोधप्रकारः

'चैत्रः तण्डुलं पचती'त्यत्र तण्डुलपदोत्तरपदं श्रूयमाणायाः प्रथमायाः आश्रयोऽर्थः, कर्मणि द्वितीया इति पाणिनिसूत्रात् । कर्म च द्वितीयावाच्यम्, पचतीत्यत्र विक्लृत्तिरूपं फलम्, तदनुकूलव्यापारश्च धातोर्लभ्यते, फलव्यापार-योर्धातुरिति अभियुक्तोक्तेः । जन्यत्वं संसर्ग आकांक्षामर्यादया भासते, अतः आश्रयोऽनन्यलभ्यो द्वितीयार्थः, तत्र प्रकृत्यर्थ ओदनोऽभेदेनान्वेति, आश्रयश्च स्ववृत्त्याश्रयत्वनिरूपकत्वसम्बन्धेन पचधात्वर्थे विक्लृत्तिरूपे फलेऽन्वेति । तच्च जनकतासम्बधेनान्वेति, कर्त्राख्यातस्थले आश्रयः, संख्या, वर्तमानकालश्चार्थः, प्रथमान्तपदार्थः चैत्रोऽभेदसम्बन्धेनाख्यातवाच्ये आश्रये अन्वेति, संख्या समान-पदोपात्ते आश्रये, वर्तमानकालो धात्वर्थव्यापारे, तिङर्थोऽपि धात्वर्थे प्रकारतया अन्वेति । तथा चायं बोधः पर्यवस्यति—तण्डुलाभिन्नाश्रयकविक्लृत्त्यनुकूलः एकचैत्राभिन्नाश्रयको वर्तमानो व्यापारः, इति । नवीनमते तु द्वितीयायाः कर्मत्वे शक्तिः, कर्मीभूततण्डुलविशिष्टः चैत्राभिन्नकर्तृकवर्तमानकालिकः पाक इति विशेषः ।

## चैत्रेण पच्यते इत्यत्र बोधः

'चैत्रेण तण्डुलः पच्यते' इत्यत्र कर्माख्यातस्य कर्ता, तृतीयायाश्चाश्रयोऽर्थः, 'अनन्यलभ्यः शब्दार्थः' इति न्यायात् । तृतीयार्थ आश्रयो धात्वर्थे व्यापारे अन्वेति, प्रथमान्ततण्डुलपदार्थान्विताख्यातार्थाश्रयश्च धात्वर्थे फलेऽन्वेति, फलञ्च व्यापारेऽन्वेति । एवञ्च तण्डुलाभिन्नाश्रयकविक्लृत्त्यनुकूलः चैत्राभिन्नाश्रयकः वर्तमानव्यापार इति बोधः ।

## भावाख्याते बोधप्रकारः

'चैत्रेण सुप्यते' इति भावाख्यातस्थले तिङ्प्रत्ययः धात्वर्थस्यानुवादकः, लट्लकारो वर्तमानकालबोधकः, तथा च शाब्दबोधः—चैत्राभिन्नाश्रयकः वर्तमानस्वाप इति, चैत्रः न पचतीत्यत्र चैत्रकर्तृकपाकाभाव इति बोधः, प्रकारतासम्बन्धेन नञर्थविशेष्यकशाब्दबोधं प्रति विशेष्यतासम्बन्धेन धातु-

जन्यभावनोपस्थितेः कारणत्वात् । नीलो घट इत्यत्र नीलपदोत्तरप्रथमाविभक्त्यर्थः प्रातिपदिकार्थेऽभेदसम्बन्धेन घटपदार्थेऽन्वेति–इति विशेषो बोध्यः ।

## अथ तार्किकमते शाब्दबोधप्रकारः

'चैत्रः तण्डुलं पचती'त्यत्र द्वितीयार्थ आधेयत्वम्, 'कर्मणि द्वितीया' इति सूत्रात् कर्मत्वं द्वितीयार्थ इत्यवगम्यते । तच्च कर्मत्वं क्रियाजन्यफलशालित्वरूपम्, नत्वखण्डम्, तत्र क्रिया, फलञ्च धातुतो लभ्यते, फलस्य व्यापारजन्यत्वं संसर्गमर्यादया भासते, अनन्यलभ्यः शब्दार्थ इति न्यायेन तावन्मात्रमेव द्वितीयार्थः, तच्च निरूपितत्वसम्बन्धेन तण्डुले अन्वितं सत्, आश्रयतासम्बन्धेन धात्वर्थफले अन्वेति, धात्वर्थास्यानुकूलतासम्बन्धेनाख्यातार्थकृतावन्वयः, तस्य आश्रतासम्बन्धेन प्रथमान्तपदार्थे अन्वयः ( अतः तण्डुलवृत्तिविक्लृत्त्यनुकूलव्यापारानुकूलकृत्याश्रयश्चैत्रः–इति । ) आख्यातैकवचनार्थ एकत्वसंख्या प्रथमान्तार्थे अन्वेति, तथा च बोधः–तण्डुलनिरूपिताधेयाश्रयत्वविक्लृत्त्यनुकूलव्यपारानुकूलकृतिमान् एकत्वविशिष्टः चैत्रः–इति ।

## चैत्रेण तण्डुलः पच्यते इत्यत्र बोधः

'चैत्रेण तण्डुलः पच्यते' इत्यत्र तृतीयार्थः कृतिः, तस्य जन्यत्वसम्बन्धेन धात्वर्थव्यापारे अन्वयः, तस्य कर्माख्यातस्थले धातोरर्थे फले जन्यतासम्बन्धेनान्वयः, कर्माख्यातार्थश्चाश्रयत्वम्, आश्रयत्वञ्च स्वरूपसम्बन्धेन प्रथमान्तपदार्थे अन्वेति । इत्थञ्च चैत्रनिष्ठकृतिजन्यव्यापारजन्यविक्लृत्त्याश्रयस्तण्डुलः-इति ।

## चैत्रेण सुप्यते इत्यत्र बोधः

'चैत्रेण सुप्यते' इत्यत्राख्यातप्रत्ययस्य भावे चाकर्मकेभ्य इति सूत्रेण विहितत्वात्, भावस्य च धातोरेव लाभात् शाब्दिकमतवत् साधुत्वमेव । आख्यातवाच्या एकत्वसंख्या शाब्दबोधे न प्रतिभासते संख्याभिधानयोग्यस्य प्रथमान्तपदोपस्थाप्यस्यार्थस्याभावात्, एवञ्च चैत्रकर्तृकः स्वाप इति धात्वर्थमुख्यविशेष्यको बोधः ।

## चैत्रो न पचतीत्यत्र बोधः

'चैत्रो न पचती'त्यत्र पाकविशिष्टा कृतिः, तस्या नञर्थाभावे प्रतियोगितासम्बन्धेन, तस्याश्रयतासम्बन्धेन प्रथमान्तपदोपस्थाप्ये चैत्रे अन्वयः, एवञ्च पाकानुकूलवर्तमानकृत्यभाववान चैत्रः–इति ।

### चैत्र एव पचतीत्यत्र बोधः

'चैत्र एव पचती'त्यत्र श्रूयमाणस्य एवकारस्य अन्यः, अभावश्चार्थः, तत्र प्रथमान्तपदोपस्थाप्यस्य चैत्रस्य प्रतियोगितासम्बन्धेन एवकारार्थैकदेशे भेदे अन्वयः, व्युत्पत्तिवैचित्र्येणाख्यातार्थकृतौ अन्वितस्य एवकारार्थस्याभावस्य एवकारार्थेऽन्यस्मिन्नन्वयो बोध्यः, तथा च चैत्रः पाकानुकूलकृतिमान् चैत्रान्यः पाकानुकूलकृत्यभाववान् इति बोधः।

### मीमांसकमते चैत्र ओदनं पचतीत्यत्र बोधप्रकारः

अत्र वाक्ये पचतीत्याख्यातेन भावना, संख्याद्यभिधीयते, द्वितीयार्थः कर्मत्वम्, तत्र एकवचनोपात्ता एकत्वसंख्या सामानाधिकरण्यसम्बन्धेन भावनायामन्वेति, द्वितीयार्थः कर्मत्वम्, तत्र प्रकृत्यर्थस्योदनस्य निष्ठत्व-सम्बन्धेनान्वयः, चैत्र इत्यत्र प्रथमार्थः चैत्रः, चैत्रपदं तात्पर्यग्राहकम्, पचधात्वर्थः पाकः, स च स्वनिष्ठकरणतानिरूपकौदनोद्देश्यकत्वसम्बन्धेन भावनायामन्वेति, तथा चायं वाक्यार्थः–चैत्रनिष्ठकर्तृतानिरूपिका सामानाधि-करण्यसम्बन्धेन एकत्वविशिष्टं यत् ओदनवृत्तिकर्मत्वं स्वनिरूपकपाकानु-कूलतासम्बन्धेन कर्मत्वविशिष्टा स्वनिष्ठकरणतानिरूपकौदनोद्देश्यकत्वसम्बन्धेन पाकविशिष्टा सामानाधिकरण्येन एकत्वविशिष्टा वर्तमानकालिका भावनेति।

### चैत्रेणोदनः पच्यत इत्यत्र बोधः

अत्र सामानाधिकरण्येन एकत्वविशिष्टं यदोदनवृत्तिकर्मत्वं स्वनिरूपक-पाकानुकूलत्वसम्बन्धेन कर्मत्वविशिष्टा स्वनिष्ठकरणतानिरूपकौदनद्देश्यकत्व-सम्बन्धेन पाकविशिष्टा वर्तमानकालिकभावना इति शाब्दबोधः।

### भावाख्यातस्थले बोधप्रकारः

'चैत्रेण सुप्यते' इति भावाख्यातेनापि भावना बोध्यते, तस्य वाक्यस्य चैत्रेणः स्वापः क्रियते इति विवरणात्, धात्वर्थस्स्वापोऽपि आख्यातार्थः, 'लः कर्मणि च भावे चाकर्मकेभ्यः' इत्यत्र भावे चाकर्मकेभ्यः इत्यनुशासनात्, एवञ्चाख्यातार्थः स्वापोऽपि भावनायामन्वेति, चैत्रकर्तृका एकत्वविशिष्टस्वापवती स्वापभावनेति शाब्दबोधः, अत्र द्वितीयवारं स्वापस्य बोधः साधुत्वार्थः इति मूले व्यक्तम्।

### चैत्रो न पचतीत्यत्र बोधः

'चैत्रो न पचती'त्यत्र चैत्रकर्तृका पाकभावना अभावप्रतियोगि-नीति, अत्र नञर्थोऽभावोऽपि प्रतियोगितासम्बन्धेन भावनायामन्वेति,।

एवम् चैत्र एव पचतीत्यत्र चैत्रवृत्तिः चैत्रान्यावृत्तिरेककर्तृका पाकभावनेति, 'नीलो घटः' इत्यत्र अस्तीतिपदस्याध्याहारात् नीलपदस्य लक्षणया नीलत्वजातौ शक्तस्य लक्षणया नीलत्वावच्छिन्नगुणविशिष्टतात्पर्यग्राहकत्वम्, तदुत्तरप्रथमाभिहितस्य द्रव्यस्यास्तीत्याख्यातोपात्तभावनायामेवान्वयः, न तु घटेन सहाभेदसम्बन्धेनान्वयः, एवं घटपदोत्तरप्रथमायाः घटोऽर्थः, घटपदम् तात्पर्यग्राहकम्। एवञ्च प्रथमार्थद्वयस्य नीलगुणविशिष्टस्य, घटस्य च कर्तृता-सम्बन्धेन शाब्दबोधे जाते, पश्चात् घटस्य परिच्छेदकीभूतगुणापेक्षायाम्, गुणस्य चाश्रयापेक्षायां मानसो गुणविशिष्टस्याभेदानुभवः।

अथवा स्वाभिन्नघटवृत्तिकर्तृत्वसम्बन्धेन भावनायामन्वयः, घटपदोत्तरप्रथमार्थस्य स्ववृत्तिकर्तृत्वेनेति बोध्यम्। अस्मिन् पक्षेऽभेदस्य शाब्दत्वमिति विशेषो बोध्यः। एवञ्च नीलविशिष्टा घटविशिष्टा च सत्ता भावनेति।

श्रीमदाचार्यखण्डदेवप्रोक्ताः लिङ्घटितवाक्ये, निषेधवाक्ये, नातिरात्रे-षोडशिनं गृह्णातीतिवाक्ये च शाब्दबोधप्रकाराः लाघवेनानुगमरीत्या परिष्कृत्य अस्मद्गुरुचरणैः श्रीहरिहरकृपालुमहोदयैरस्मभ्यमुपदिष्टाः। तेऽत्र विदुषाम् प्रमोदाय, छात्राणामुपकाराय च मुद्राप्यन्ते।

## विधिस्थले शाब्दबोधः

तथाहि- 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र लिङर्थः शाब्दीभावना लिङादिशब्दनिष्ठा, आर्थीभावना आख्यातवाच्या पुरुषनिष्ठा, तत्र शब्द-पुरुष-निष्ठयोर्द्वयोर्भावनयोर्व्यधिकरणत्वात् कथं शाब्दभावनाया आर्थीभावनाया-मन्वय इति चेत्?।

उच्यते—स्वनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञानविशेष-निष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकायमत्र प्रवर्ततामित्याकारकाप्रे-च्छाविषयीभूतकृतिविषयत्वरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरू-पकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकसाध्यनिष्ठप्रतियोगिता-सम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठाभावीयविशेषणतासम्बन्धावच्छि-न्नावच्छेदकतानिरूपकाधिकरणनिष्ठनिरूपितत्वसम्बन्धावच्छिन्नावच्छेदकतानिरू-पकवृत्तित्वनिष्ठप्रतियोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकाभावनिष्ठविषय-तासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छे-दकतानिरूपकेष्टसाधनत्वादिव्याप्यताद्दशकृतिविषयत्ववानयमित्याकारकज्ञाननिष्ठ-जनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकेष्टसाधनत्वकृतिसाध्यत्वबलवदनिष्टा-

ननु बन्धित्वैतत्त्रितयनिष्ठविधेयताख्यविषयताविशेषावच्छिन्नावच्छेदकतानिरूपक-ज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकजातपुत्रः कृष्णकेशोऽग्नीनादधीत, वसन्ते ब्राह्मणो अग्नीनादधीतेत्येवमादिवाक्यविहिताधानादिजनिता-दृष्टरूपयोग्यतानिष्ठविषयतासंबंधावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकता-सम्बन्धावच्छिन्नावच्छेदकतानिरूपकत्वविशिष्ट यागो मे भूयात् इत्याकारकेच्छा-निष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकत्वविशिष्टयागं कृत्या साधया-मीत्याकारकचिकीर्षानिष्ठजनकतासम्बन्धावच्छिन्नाऽवच्छेदकतानिरूपकत्वविशिष्ट-यागेन स्वर्गङ्कुर्यादित्याकारककृतिनिष्ठजन्यत्वीयस्वरूपसम्बन्धावच्छिन्नजन्यत्वनि-ष्ठावच्छेदकतानिरूपकाश्रयत्वनिष्ठसांसर्गिकविषयतानिरूपितत्वविशिष्ट प्रजापति-र्यज्ञानसृजतेत्येवमाद्यर्थवादलक्षितप्राशस्त्यज्ञानजनितप्ररोचनारूपेतिकर्तव्यतावि-शिष्टतदीयसम्बन्धघटकतावत्पदार्थविषयकज्ञाननिष्ठप्रवर्तनाभाव्यप्रवृत्तिनिष्ठज-न्यतानिरूपितजनकतारूपसम्बन्धज्ञानकरणतानिरूपकत्वविशिष्टस्वनिष्ठप्रकारतानि-रूपितत्वविशिष्टप्रधानयागजन्यपरमापूर्वोत्पत्त्यपूर्वान्यतरवृत्तिशक्तिनिष्ठजन्यतानि-रूपितजनकतावच्छेदकीभूतसामान्यसम्बन्धबोधकप्रकरणपठितवाक्यविहितविजा-तीयव्यापारत्वतदाश्रयत्वान्यतरवत्त्वरूपेतिकर्त्तव्यतात्वावच्छिन्नेतिकर्त्तव्यताविशि-ष्टप्रयाजादिभिः प्रधानयागमुपकुर्यामित्याकारकक्रत्वव्यवहितपूर्वकालवृत्तित्वविशि-ष्टप्रकरणपठिततत्तन्मन्त्रस्मारितद्रव्यदेवतादिरूपोद्भिच्चित्राज्यतत्प्रख्यतद्व्यपदे-शान्यतमन्यायसिद्धनामावच्छिन्नधात्वर्थनिष्ठपदश्रुतिबोध्यप्रवृत्तिभाव्यस्वर्गत्वाव-च्छिन्नजन्यतानिरूपितजनकतारूपकरणत्वनिरूपकत्वविशिष्टप्रयोगविधिविषयीभूत समे दर्शपूर्णमासाभ्यां यजेतेत्येवमादिवाक्यविहितसमादिदेशनिष्ठाधिकरणता-निरूपकत्वविशिष्टसाङ्गप्रधानानुष्ठानापेक्षितदर्शादिकालनिष्ठाधिकरणतानिरूपक-त्वविशिष्टकाम्यमानस्वर्गत्वावच्छिन्नोद्देश्यतानिरूपकत्वविशिष्टाख्यातैकवचनार्थै-कत्वविशिष्टाक्षिप्तकर्तृसमवेता भावनेति भाट्टमीमांसकानां मतेन शाब्द-बोधः—इति ।

### न कलञ्जं भक्षयेदित्यत्र शाब्दबोधप्रकारश्चायम्

न कलञ्जं भक्षयेदित्यत्रलिङा निवर्तनोच्यते, प्रवृत्त्यभावरूपा निवृत्ति-राख्यातेनोच्यते, नञ्पदं तात्पर्यग्राहकम्, तत्र शब्द-पुरुषनिष्ठयोर्निवर्तना-निवृत्त्योर्व्यधिकरणत्वात् कथं निवर्त्तनायाः निवृत्तावन्वय इति चेत्? उच्यते-स्वनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेकतानिरूपकंज्ञानविशेषनिष्ठजनक-तासम्बन्धावच्छिन्नावच्छेदकतानिरूपक कलञ्जभक्षणादयं निवर्ततामित्या-

कारकाप्तेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकानिष्टसाधनत्वव्याप्यतादृशाभावप्रतियोगिकृतिविषयत्ववत् कलञ्जभक्षणात्मकभक्षनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकानिष्ठसाधनत्ववत् कलञ्जभक्षणमित्याकारकानुमितिनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकस्वनिरूपितकारणतावच्छेदकीभूतसम्बन्धनाशकालीनाभावनिष्ठानुयोगितासम्बन्धावच्छिन्नावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितविषसंसृष्टबाणहतमृगीयमांसं कलञ्जमिति वाक्यशेषावगताप्राशस्त्येतिकर्तव्यताविशिष्टतदीयसम्बन्धज्ञानकरणकत्वविशिष्टस्वनिष्ठप्रकारतानिरूपितनिवृत्तिभाव्याभावप्रतियोगिप्रत्यवायनिष्ठजन्यतानिरूपितजनकतारूपभक्षणात्मकधात्वर्थनिष्ठकरणतानिरूपकत्वविशिष्ठजुगुप्साजनितपराङ्मुखत्वादिरूपव्यापारेतिकर्तव्यताविशिष्टस्वप्रतियोगिप्रत्यवायप्रयोजककलञ्जनिष्ठउद्देश्यतानिरूपितत्वविशिष्टविशेष्याश्रयीभूता निवृत्तिरिति शाब्दबोधः—इति ।

## नातिरात्रे षोडशिनं गृह्णातीत्यत्र शाब्दबोधः

नातिरात्रे षोडशिनं गृह्णातीत्यत्र केवलनिषेधापेक्षया वैलक्षण्यस्य विद्यमानत्वात् तत्प्रदर्शनाय शाब्दबोधप्रकारो लिख्यते, तत्र स्वविषयकज्ञानविशेषनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेकतानिरूपकषोडशिग्रहणादयम् निवर्ततामित्याकारकाप्तेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेकतानिरूपकातिरात्रानुपकारकत्वव्याप्यतादृशकृतिविषयत्वरूपहेतुमत् षोडशिग्रहग्रहणमित्याकारकपरामर्शनिष्ठजनकतासंबन्धावच्छिनावच्छेदकतानिरूपकातिरात्रानुपकारकत्ववत् षोड़शिग्रहणमित्याकारकानुमित्यादिनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेकतानिरूपकातिरात्रनामकयागजन्यपरमापूर्ववृत्तिशक्तिनिष्ठषोडशिग्रहणोपकार्यत्वाभावरूपहेतुनिष्ठविषयतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकज्ञाननिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकतदितराङ्गनिष्ठोपकारकतानिरूपितापकार्यत्वरूपसाध्यव्यप्यषोडशिग्रहणोपकार्यत्वाभावरूपहेतुमदतिरात्रनामकयागजन्यपरमापूर्ववृत्तिशक्तिरित्याकारकपरामर्शनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकतदितराङ्गनिष्ठोपकारकतानिरूपितोपकार्यत्ववत् तादृशपरमापूर्वनिष्ठा शक्तिरित्याकारकानुमितिनिष्ठजनकतासम्बन्धावच्छिन्नावच्छेकतानिरूपकपूर्वप्रयोगीयषोडशिग्रहणविशेष्यकेष्ठसाधनत्वप्रकारकज्ञानधर्मिकप्रयोगान्तरावच्छिन्नाप्रामा-

ण्यज्ञाननिष्ठप्रयोजकतासम्बन्धावच्छिन्नावच्छेदकतानिरूपकस्वनिरूपितकारणता-वच्छेदकीभूतसम्बन्धनाशकालीनाभावनिष्ठानुयोगितासम्बन्धावच्छिन्नावच्छेद-कतानिरूपकप्रतियोगित्वनिष्ठसांसर्गिकविषयतानिरूपितस्वनिष्ठप्रकारतानिरूपित-निवृत्तिभाव्यवैगुण्याभावप्रयोजकाभावप्रतियोग्यनुष्ठानविषयत्वरूपधात्वर्थनिष्ठ-करणतानिरूपकत्वविशिष्टोपेक्षाज्ञानजनितौदासन्यीरूपव्यापारेतिकर्तव्यताविशि-ष्टविहितप्रतिषिद्धत्वान्यथानुपपत्तिकल्पितवैगुण्याभावरूपफलनिष्ठोद्देश्यतानिरू-पकत्वविशिष्टाख्यातैकवचनार्थैकत्वविशिष्टाक्षिप्तकर्तृसमवेता निवृत्तिरिति शाब्द-बोधः—इति संक्षेपः ।

---

## भाट्टतन्त्ररहस्ये उद्धृतानां वचनानामकारादिक्रमेणानुक्रमणिका

इति भाट्टतन्त्ररहस्ये उद्धृतानां वचनानाम्
अकारादिक्रमेणानुक्रमणिका समाप्ता

# सूचना

भाट्टतन्त्ररहस्यस्य संशोधने यादृशं काठिन्यमभूत्, यादृशञ्चास्य संस्करणस्य काञ्चीसंस्करणापेक्षया वैशिष्ट्यम्, न तदस्माकं वक्तव्यमपेक्षते, पूर्वं प्रकाशितसंस्करणं समीक्षापूर्वकमवलोकयतां नैतत्तिरोहितं भवेत्। कृतेऽपि परिश्रमे नैककारणतो विशेषतश्च मुद्रणदोषादनेका अशुद्धयोऽवशिष्टाः। प्रायेण सर्वाः अपि ताश्शुद्धिपत्रे समशोधिषत, सत्यप्येवं याः काश्चित्त्रटयोऽवस्थितास्स्युः, तदर्थमाशास्यते यदुदारहृदयाः प्रियपाठक। अस्मान् क्षाम्यन्तु, इति शम्—

## शुद्धिपत्रम्

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| भट्टतन्त्वस्य | भाट्टतन्त्वस्य | १ | ६ |
| नतिरूपम् | स्मृतिरूपम् | १ | १८ |
| निविचिकित्स | निर्विचिकित्सम् | २ | २६ |
| विपययोः | विपर्ययोः | २ | २७ |

४–५ पृष्ठयोरितरस्थलापेक्षया अभ्यनुज्ञाविधि-षोडशिग्रहणनिषेधविध्योर्वाक्यार्थे वैलक्षण्यं भाट्टदीपिका-तट्टीकयो पृ० ७४२ द्रष्टव्यम्।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| मरण | मरणानुकूल | ३ | १८ |
| सयत्वेन | सत्यत्वेन | ६ | ६ |
| दूषणासृहत्त्रात् | दूषणासहत्वात् | ६ | २६ |
| कर्मेतिसंपातायातम् | | ७ | १३ |
| सद्मावादिति | सद्भावादिति | ७ | १७ |
| अतत्रास्तिकानां | अतस्तत्रास्तिकानाम् | ८ | २३ |
| व्युत्पात्तीत्ति | व्युत्पत्तीति | ८ | २५ |
| धरणिधर | धरणीधर | ९ | २४ |

आश्चर्यमत्रर्यामिति शेषः।

| अशुद्धम् | शुद्धम् | पृष्ठे | पङ्क्तौ |
|---|---|---|---|
| न तु पुष्पवदिति संपातायातम् | | ९ | २५ |
| अस्मन्मत | अस्मन्मते | १० | ९ |
| वक्ष्ययाण | वक्ष्यमाण | १० | १२ |

